उच्चतरमाध्यमिककक्षायाः पाठ्यक्रमः

# संस्कृतव्याकरणम् - ३४६

## पुस्तकम् - ३




**राष्ट्रीय-मुक्त-विद्यालयी-शिक्षा-संस्थानम्**

ए-२४-२५, संस्थागतक्षेत्रम् , विभागः - ६२

नोएडा - २०१ ३०९ (उत्तरप्रदेशः)

जालपुटकूटम् - www.nios.ac.in निर्मूल्यः दूरभाषः - १८००१८०९३९३

**National Institute of Open Schooling**

A-२४-२५, Institutional Area, Sector – ६२

NOIDA – २०१ ३०९ (UP)

# उच्चतरमाध्यमिककक्षा - संस्कृतव्याकरणम् (३४६)

## मन्त्रणामण्डलम्

**आचार्यः चन्द्र-भूषण-शर्मा**
अध्यक्षः
राष्ट्रीय-मुक्त-विद्यालयी-शिक्षा-संस्थानम्
नोएडा, उत्तरप्रदेशः - २०१ ३०९

**श्री संजय-कुमार-सिन्हा**
निदेशकः (शैक्षिक)
रा.मु.वि.शि.संस्थानम्
नोएडा, उत्तरप्रदेशः - २०१ ३०९

**डॉ. सन्ध्या-कुमारः**
उपनिदेशकः (शैक्षिक)
रा.मु.वि.शि.संस्थानम्
नोएडा, उत्तरप्रदेशः - २०१ ३०९

## पाठ्यविषय-निर्मिति-समितिः

**प्रो. डॉ. अर्कनाथ-चौधरी (समितेः अध्यक्षः)**
उप-कुलपतिः
श्रीसोमनाथ-संस्कृत-विश्वविद्यालयः
वेरावल -३६२२६६ (गुर्जरप्रदेशः)

**डॉ. नीरजकुमारभार्गवः (समितेः उपाध्यक्षः)**
सहायकप्राध्यापकः (संस्कृताध्ययनविभागः)
रामकृष्ण-मिशन-विवेकानन्द-विश्वविद्यालयः
बेलुड-मठः, हावडा - ७११ २०२ (प.वङ्गम्)

**डॉ. हरि-राम-मिश्रः**
सहायकप्राध्यापकः (संस्कृतविभागः)
जवाहरलाल-नेहरू-विश्वविद्यालयः
नवदेहली

**स्वामी वेदतत्त्वानन्दः**
प्राचार्यः
रामकृष्ण-मठ-विवेकानन्द-वेद-विद्यालयः
बेलुड-मठः, मण्डलम् - हावडा - ७११ २०२ (प.वङ्गम्)

**डॉ. विजेन्द्र-सिंहः**
वरिष्ठ-प्राध्यापकः (संस्कृतम्)
शिक्षानिदेशालयः, केन्द्रसर्वकारः, देहली

**श्रीमान् मलय-पोडे**
सहायकप्राध्यापकः (W.B.E.S) (संस्कृतविभागः)
राणीबाँध-सर्वकारीय-महाविद्यालयः
स्थानम् - राणीबाँध, मण्डलम् - बाँकुडा - ७२२१३५ (प.वङ्गम्)

**श्रीमान् सुमन्त-चौधुरी**
सहायकप्राध्यापकः (संस्कृतविभागः)
सबं-सजनीकान्त-महाविद्यालयः
पत्रालयः - लुटुनिया, रक्षालयः - सबं
मण्डलम् - पश्चिममेदिनीपुरम् - ७२१ १६६ (प.वङ्गम्)

**डॉ. राम-नारायण-मीणा**
सहायक-निदेशकः (शैक्षिकविभागः)
राष्ट्रीय-मुक्त-विद्यालयी-शिक्षा-संस्थानम्
नोएडा, उत्तरप्रदेशः - २०१ ३०९

## पाठ्यक्रम-समन्वयकः

**डॉ. राम-नारायण-मीणा**
सहायक-निदेशकः (शैक्षिकविभागः)
राष्ट्रीय-मुक्त-विद्यालयी-शिक्षा-संस्थानम्
नोएडा, उत्तरप्रदेशः - २०१ ३०९

# पाठ्यविषयसामग्री-निर्मिति-समितिः

## संपादकमण्डलम्


**डॉ. नीरजकुमारभार्गवः**
सहायकप्राध्यापकः (संस्कृताध्ययनविभागः)
रामकृष्ण-मिशन-विवेकानन्द-विश्वविद्यालयः
बेलुड-मठः, हावडा - ७११ २०२ (प.वङ्गम्)

**स्वामी वेदतत्त्वानन्दः**
प्राचार्यः
रामकृष्ण-मठ-विवेकानन्द-वेद-विद्यालयः
बेलुड-मठः, मण्डलम् - हावडा - ७११ २०२ (प.वङ्गम्)


## पाठलेखकाः


**(पाठः १-८)**
**श्रीमान् मलय-पोडे**
सहायकप्राध्यापकः (W.B.E.S)
(संस्कृतविभागः)
राणीबाँध-सर्वकारीय-महाविद्यालयः
स्थानम् - राणीबाँध, मण्डलम् - बाँकुडा - ७२२१३५
पश्चिमवङ्गम्

**(पाठः ९-११)**
**डॉ. नीरजकुमारभार्गवः**
सहायकप्राध्यापकः
(संस्कृताध्ययनविभागः)
रामकृष्ण-मिशन-विवेकानन्द-विश्वविद्यालयः
बेलुड-मठः, हावडा - ७११ २०२ (प.वङ्गम्)

**(पाठः १२-२०)**
**स्वामी वेदतत्त्वानन्दः**
प्राचार्यः
रामकृष्ण-मठ-विवेकानन्द-वेद-विद्यालयः
बेलुड-मठः, हावडा - ७११ २०२ (प.वङ्गम्)

**(पाठः २१-२७, ३०-३१)**
**श्रीमान् राहुलगाजिः**
अनुसन्धाता (संस्कृतविभागः)
यादवपुरविश्वविद्यालयः
कलिकाता - ७०० ०३२ (प.वङ्गम्)

**(पाठः २८-२९)**
**श्रीमान् विष्णुपदपालः**
अनुसन्धाता (संस्कृताध्ययनविभागः)
रामकृष्ण-मिशन-विवेकानन्द-विश्वविद्यालयः
मण्डलम् - हावडा - ७११ २०२ (प.वङ्गम्)


## रेखाचित्राङ्कनं मुखपृष्ठचित्रणं च


**स्वामी हररूपानन्दः**
रामकृष्ण-मिशन्
बेलुड-मठः
मण्डलम् - हावडा - ७११ २०२ (प.वङ्गम्)

## अध्यक्षीयः सन्देशः

प्रिय विद्यार्थिन्

'भारतीयज्ञानपरम्परा' इति पाठ्यक्रमस्य अध्ययनाय अध्येत्रे हार्दं स्वागतं व्याह्रियते।

भारतम् अति प्राचीनम् अति विशालं च। भारतस्य वाङ्मयमपि तथैव प्राचीनं प्रशस्यतरं सुमहत् च। सृष्टिकर्ता भगवान् एव भारतीयानां सकलविद्यानाम् उत्स इति सिद्धान्तः शास्त्रेषु। भारतस्य सुज्ञाते अल्पज्ञाते अज्ञाते च इतिहासे वाग्विनिमयस्य माध्यमं संस्कृतमिति सुविदितं समेषाम्। प्रदीर्घे अस्मिन् भारतेतिहासे यानि शास्त्राणि समुद्भूतानि, यत् चिन्तनं प्रावर्तत, ये भावाः प्रकटिताः तत्सर्वमपि संस्कृतभाषाभाण्डारे निबद्धमस्ति। अस्य भाण्डारस्य आकारः कियान्, तलः कियान् गभीरः, मूल्यं कियद् अधिकम् इति निर्धारणे न कोऽपि समर्थः। पुरा किं किं पठन्ति स्म भारतीया इति एकेन श्लोकेन कथञ्चित् संक्षिप्य प्रकट्यते -

**अङ्गानि वेदाश्चत्वारो मीमांसा न्यायविस्तरः।**
**पुराणं धर्मशास्त्रं च विद्या ह्येताश्चतुर्दश।। (वायुपुराणम् ६१.७८)**

अस्मिन् श्लोके चतुर्दश विद्यास्थानानि कथ्यन्ते। चत्वारो वेदाः (उपवेदाः च) षड् वेदाङ्गानि मीमांसा (पूर्वोत्तरमीमांसे) न्यायः (आन्वीक्षिकी) पुराणम् (अष्टादश मुख्यानि पुराणानि, उपपुराणानि च) धर्मशास्त्रम् (स्मृतिः) इति चतुर्दश विद्यास्थानानि कथ्यन्ते। इतोऽपि काव्यादीनि बहूनि शास्त्राणि सन्ति। एतासां विद्यानाम् उत्सः प्रवाहः प्रदानं प्रगतिः प्रवृद्धिः च महता कालेन जाता। समाजस्य कल्याणाय भारतस्य पाठदानपरम्परायां गुरुकुलेषु आध्यात्मिका मनोवैज्ञानिका शरीरारोग्यविषया राजनीतिः दण्डनीतिः काव्यानि काव्यशास्त्राणि अन्यानि च बहूनि शास्त्राणि पाठ्यन्ते पठ्यन्ते स्म।

एतासाम् विद्यानां शिक्षणाय बटुः पितृगृहं त्यक्त्वा गुरुकुलेषु ब्रह्मचर्याश्रमं यापयति स्म। एतासु निष्पाणो भवति स्म। एतासु विद्यासु निष्णाता जना अद्यापि केचित् सन्ति। नैसर्गिकपरिवर्तनानि परदेशीयानि आक्रमणानि स्वदेशीया विप्लवाः इत्यादिभिः बहुभिः कारणैः एता विद्या यथापूर्वं न पाठ्यन्ते भारते। अपिच ये केऽपि पठन्ति तेषां पाठ्यक्रमः परीक्षा प्रमाणपत्रम् इत्यादिकम् आधुनिकशिक्षणपद्धत्या क्वचित् राज्येषु भवति, बहुत्र नैव भवति। अतः एतेषां प्राचीनशास्त्राणाम् अध्ययनं परीक्षणं प्रमाणीकरणं च भवतु इति धिया अयं पाठ्यक्रमः राष्ट्रियमुक्तविद्यालयीशिक्षासंस्थानेन प्रारब्धः। जनहिताकारि यद् यावद् यथा च ज्ञानं एतेषु शास्त्रेषु निहितं निभृतम् चास्ति तद् जनानां पुरस्तात् प्रकटितं भवतु इति लक्ष्यम्। तेन सर्वेऽत्र सुखिनः सन्तु, सर्वे सन्तु निरामयाः, सर्वे भद्रदृष्टिसम्पना भूत्वा भद्राणि पश्यन्तु, मा कश्चिद् दुःखम् आप्नुयात्, मा कश्चिद् दुःखदाने प्रवर्तेत इति अत्यन्तम् उदारम् उद्देश्यम् 'भारतीयज्ञानपरम्परा' इति नामकस्य अस्य पाठ्यक्रमस्य प्रकल्पने वर्तते। विज्ञानं शरीरारोग्यं चिन्तयति। कलाविषया मनोविज्ञानम् आध्यात्मिकविज्ञानं मनोरञ्जनं च चिन्तयन्ति। विज्ञानं साधनस्वरूपं सुखोपभोगः साध्यं चास्ति। अतः विज्ञानादपि कलाशाखायाः श्रेष्ठत्वं निःसन्देहमस्ति। जनः कलाम् उपयुज्य विज्ञानात् सुखम् नाप्नोति। अपि तु विज्ञानम् उपयुज्य कलातः सुखमाप्नोति। नात्र व्यतिक्रमः परिलक्ष्यते।

अयं संस्कृतव्याकरणस्य पाठ्यक्रमः छात्रानुकूलो ज्ञानवर्धको लक्ष्यसाधकः पुरुषार्थसाधकश्च अस्ति इति विश्वसिमि।

अस्य पाठ्यक्रमस्य निर्माणे ये हिताभिलाषिणो विद्वांसः उपदेष्टारः पाठलेखकाः त्रुटिसंशोधकाः टङ्कायोजकाः च साक्षात् परोक्षरूपेण वा साहाय्यं कृतवन्तः, तेभ्यः संस्थानपक्षतो हार्दिकं कार्तज्ञ्यं व्याह्रियते। रामकृष्णमिशन्-विवेकानन्द-विश्वविद्यालयस्य कुलपतिवर्याः श्रीमन्तः स्वामिन आत्मप्रियानन्दाः विशेषतो धन्यवादार्हा येषाम् आनुकूल्यं प्रेरणां च विना कार्यस्यास्य परिसमाप्तिः दुष्करा एव।

अस्य पाठ्यक्रमस्य अध्येतारो धन्या भवन्तु, सफला भवन्तु, विद्वांसो भवन्तु, सज्जना भवन्तु, देशभक्ता भवन्तु, समाजसेवका भवन्तु इति अति हार्दा सदिच्छा अस्माकम्।

(डॉ. चन्द्रभूषणशर्मा)
अध्यक्षः
राष्ट्रीय-मुक्त-विद्यालयी-शिक्षा-संस्थानम्

## निदेशकीया वाक्

प्रिय अध्येतः

'भारतीयज्ञानपरम्परा' इति पाठ्यक्रमं पठितुम् उत्साहिभ्यो भारतीयज्ञानपरम्पराया अनुरागिभ्य उपासकेभ्यश्च हार्दिकं स्वागतं विज्ञाप्यते। परमहर्षविषयः अयं यद् गुरुकुलेषु अधीयाना विषया अस्माकं राष्ट्रीय-मुक्त-विद्यालयी-शिक्षा-संस्थानस्य पाठ्यक्रमेऽपि समाविष्टा भवन्ति। आ बहोः कालाद् विद्यमानः अन्तरायो दूरीभवेदिति आशासे। हिन्दुजैनबौद्धानां धर्मिकम् आध्यात्मिकं काव्यादिकं च वाङ्मयं प्रायः सर्वमपि संस्कृते निबद्धमस्ति। एतेषां शतस्य कोटीनां मनुजानां प्रियाणाम् विषयाणाम् भूमिकायै प्रस्तुत्यै प्रवेशयोग्यतायै प्ररोचनायै च माध्यमिकस्तरे उच्चमाध्यमिकस्तरे च केचिद् विषयाः पाठ्यत्वेन योज्यन्ते। यथा आंग्ल-हिन्द्यादिभाषाज्ञानं विना तत्तद्भाषया लिखिता माध्यमिकस्तरीया ग्रन्थाः पठितुं बोद्धुं च न शक्यन्ते तद्वत् अत्रापि प्रारम्भिकं संस्कृतं न जानाति चेत् इमं पाठ्यक्रमं बोद्धुं न पारयेत्। अतः प्रारम्भिकं संस्कृतं विद्वान् छात्रः अत्र अस्य पाठ्यक्रमस्य अध्ययने अधिकारित्वेन इति गण्यते।

गुरुकुलेषु अधीयानाः छात्रा अष्टमकक्षां यावत् कामं स्वपरम्परानुसारम् अध्ययनं करोतु। नवमदशमकक्षयोः तु एकादशद्वादशकक्षयोः च भारतीयज्ञानपरम्परा इति पाठ्यक्रमस्य निष्ठया नियमितम् अध्ययनं करोतु। अस्य पाठ्यक्रमस्य अध्येता उच्चशिक्षायै योग्यो भविष्यति।

संस्कृतस्य विभिन्नेषु शास्त्रेषु कृतभूरिपरिश्रमाः विद्वांसः प्राध्यापकाः शिक्षकाः शिक्षाविदः च अस्य पाठ्यक्रमस्य प्रारूपरचनायाम् विषयनिर्धारणे विषयपरिमाणनिर्धारणे विषयप्रकटनभाषास्तरनिर्णये विषयपाठलेखने च संलग्नाः। अतः अस्य पाठ्यक्रमस्य स्तरः उन्नत एव इति किम् उ वक्तव्यम्।

संस्कृतव्याकरणस्य एषा स्वाध्यायसामग्री भवतां कृते पर्याप्ता सुबोधा रुचिरा आनन्दरसस्यन्दिनी सौभाग्यदायिनी धर्मार्थकाममोक्षोपयोगिनी च स्यादिति आशास्महे। अस्य पाठ्यक्रमस्य प्रधानं लक्ष्यं यद् भारतीयज्ञानपरम्परायाः शैक्षणिकक्षेत्रेषु विशिष्टं योग्यं च स्थानं स्वीकृतिः गवेषणा च स्यादिति। तल्लक्ष्यम् पाठ्यक्रमेणानेन सेत्स्यति इति दृढविश्वासिनो वयम्।

अध्येता अध्ययनकाले यदि मन्येत यद् अस्मिन् अध्ययनसम्भारे पाठनिचये यत्र संशोधनं परिवर्तनं परिवर्धनं संस्कारः च अपेक्ष्यन्ते, तेषां समेषां प्रस्तावानां वयं स्वागतं कर्तुं सिद्धाः स्मः। अमुं पाठ्यक्रमम् इतोऽपि अधिकम् प्रभाविनम् उपयोगिनं सरलं च विधातुं भवद्भिः सह वयं सदा प्रयत्नपरा एव।

अध्येतॄणां समेषामपि अध्ययने साफल्याय जीवने च साफल्याय कृतकृत्यायै च आशीर्वचः अस्माकम्।

किं बाहुना विस्तरेण। अस्माकं गौरववाणीं जगति विरलाम् सर्वविद्याया लक्ष्यभूताम् एव उद्धरामि -

**सर्वेऽत्र सुखिनः सन्तु सर्वे सन्तु निरामयाः।**
**सर्वे भद्राणि पश्यन्तु मा कश्चिद् दुःखभाग् भवेत्॥**
**दुर्जनः सज्जनो भूयात् सज्जनः शान्तिमाप्नुयात्।**
**शान्तो मुच्येत बन्धेभ्यो मुक्तश्चान्यान् विमोचयेत्॥**
**स्वस्त्यस्तु विश्वस्य खलः प्रसीदतां ध्यायन्तु भूतानि शिवं मिथो धिया।**
**मनश्च भद्रं भजतादधोक्षजे आवेश्यतां नो मतिरप्यहैतुकी॥**

श्री संजय-कुमार-सिन्हा
निदेशकः (शैक्षिकविभागस्य)
राष्ट्रीय-मुक्त-विद्यालयी-शिक्षा-संस्थानम्

## समन्वयकीयानि वचांसि

प्रिय जिज्ञासो

**ॐ सह नाववतु। सह नौ भुनक्तु। सह वीर्यं करवावहै। तेजस्विनावधीतमस्तु। मा विद्विषावहै॥ ॐ शान्तिः शान्तिः शान्तिः॥**

परम्पराम् अवलम्ब्य इयं प्रार्थना यद् अस्माकम् अध्ययनं विघ्नरहितं भवतु। अज्ञाननाशकं तेजस्वि भवतु। विद्वेषभावनानाशकं भवतु। विद्यालाभेन सर्वविधतापानां शान्तिः भवतु इति।

भारतीयज्ञानपरम्परा इति पाठ्यक्रमस्य अङ्गभूतोऽयं पाठ्यविषयः। अस्य माध्यमिककक्षायाः कृते निर्धारणमस्ति। एतत्पाठ्यक्रमस्य पाठनिचयात्मिकाम् इमाम् अध्ययनसामग्रीम् भवते ददद् अहं परमं हर्षम् अनुभवामि। सरलं संस्कृतं जानन् यः कोऽपि अस्य अध्ययने समर्थो गण्यते।

संस्कृतव्याकरणस्य अध्ययनं सोपानक्रमेण भवति। अतः सोपानस्य प्रति पर्व आरोहणं क्रमेणैव कर्तव्यमिति इत्यतः पाणिनीयाम् अष्टाध्यायीं विद्वांसः भिन्नक्रमेणापि व्याख्यातवन्तः। सोऽयं प्रक्रियाक्रमः। तं क्रमम् अवलम्ब्य निर्मिता इयं सामग्री सोपनपर्वक्रमेणैव आयोजिता अस्ति। माध्यमिककक्षायां एकः भागः उच्चमाध्यमिककक्षायां च अवशिष्टः भागः वर्तते। एतेन पाणिनीयतन्त्रे प्रवेशाय छात्रस्य योग्यता कल्प्यते। एतत्सामग्री पाणिनीयतन्त्रस्य सश्रद्धम् अध्ययने प्रवेशाय प्ररोचनाय च। अनया आकरग्रन्था न गतार्था न वा हेयाः अपि तु गभीरतया अध्येयाः।

समग्रोऽपि पाठ्यविषयः त्रिषु पुस्तकेषु कल्पितोऽस्ति। अस्य अध्ययनेन व्याकरणस्य मूलभूतं ज्ञानं छात्रस्य भवेत्। सूत्राणि सूत्रव्याख्या, उदाहरणानि, उदाहरणेषु सूत्रस्य प्रवृत्तिः, रूपनिष्पत्तिश्च इति लक्ष्यलक्षणात्मकोऽयं व्याकरणप्रपञ्चः अत्र वर्तते।

अध्येता पाठान् सम्यक् पठित्वा पाठगतानां प्रश्नानाम् उत्तराणि स्वयं विचार्य अन्ते प्रदत्तानाम् उत्तराणां दर्शनं कुर्यात्, तैः उत्तरैः स्वस्य उत्तरं च मेलयेद्। प्रतिपत्रं प्रदत्ते रिक्तभागे स्वस्य टिप्पणीं रचयेद्। पाठान्ते प्रदत्तानाम् उत्तराणि निर्माय परीक्षायै सन्नद्धो भवतु।

पाठ्यक्रमस्य सविस्तरं विवेचनं प्रश्नपत्रस्य पारूपम् प्रश्नपत्रस्य प्रतिमा तदुत्तराणि च पुस्तकस्य अन्ते द्रष्टव्यानि। अध्ययनारम्भात् प्राक् नूनमेव अध्येता तत्र दत्तान् बिन्दून् अवलोकयेत्। तेन अध्ययनस्य दिशा गतिः च सुष्ठु स्याताम्।

अध्ययनसम्भारे क्वापि काठिन्यम् अनुभूयते चेत् अध्ययनकेन्द्रं यथाकालं गत्वा समस्यासमाधानाय आचार्यं पश्यतु। राष्ट्रियमुक्तविद्यालयीशिक्षासंस्थानेन सह ई-पत्रद्वारा सम्पर्कं वा करोतु। जालपुटे अपि संपर्कव्यवस्था वर्तत एव। जालपुटकूटः www.nios.ac.in इति अस्ति।

पाठ्यविषयोऽयं भवतः ज्ञानं वर्धयतात् , परीक्षासु साफल्यम् आवहतात् , रुचिं वर्धयतात् , मनोरथान् पूरयतात् इति कामये।

अज्ञानान्धकारस्य नाशाय ज्ञानज्योतिषः दर्शनाय च इयं मे हार्दिकी प्रार्थना -

**ॐ असतो मा सद् गमय। तमसो मा ज्योतिर्गमय। मृत्योर्मामृतं गमय॥ ॐ शान्तिः शान्तिः शान्तिः॥**

भवत्कल्याणकामी

(राम-नारायण-मीणा)

पाठ्यक्रमसमन्वयकः (शैक्षिकम्)

राष्ट्रीय-मुक्त-विद्यालयी-शिक्षा-संस्थानम्

## पुस्तकम्- १



## पुस्तकम्- २



## पुस्तकम्- ३

# संस्कृतव्याकरणम्

# उच्चतरमाध्यमिककक्षा

## तृतीयं स्वाध्यायसोपानम्

| क्रमः | विषयसूची | पृष्ठसंख्या |
|---|---|---|

# २४

# णिजन्तप्रकरणम्

## प्रस्तावना

भवन्तः पूर्वं दशगणीयधातूनां विषये परिचयं प्राप्तवन्तः। इदानीं णिजन्तप्रकरणम् आरभ्यते। णिच् एकः प्रत्ययः। णिच् यस्य अन्ते भवति स शब्दः णिजन्त इत्युच्यते। णिच्प्रत्ययो द्विविधो भवति। तद्यथा चुरादिगणीयधातुभ्यः यः णिच्प्रत्ययो भवति स तु प्रकृतेरेव अर्थं परिपोषयति इति हेतोः स्वार्थिको भवति, अनिर्दिष्टार्थाः प्रत्ययाः स्वार्थे भवन्ति इति परिभाषाबलात् इत्येकम्। अपरं तावत् दशगणीयधातुभ्यः प्रेरणा (कराना) इत्यर्थेऽपि णिच् प्रत्ययो भवति। स एव अत्र आलोच्यविषयः। यथा हिन्दीभाषायां पढना – पढाना, लिखना– लिखाना, खाना– खिलाना, पीना–पिलाना इत्यादिप्रयोगा भवन्ति। एवं संस्कृतेऽपि यथा खादति–खादयति, लिखति–लेखयति, पिबति–पाययति इत्यादयः प्रयोगाः। अत्र दशगणीयधातुभ्यः णिच्प्रत्ययं कृत्वा प्रेरणावाचकः नूतनः धातुः निर्मीयते। यथा पठ्–धातोः अर्थः पढना (हिन्दी) इति, अस्मात् धातोः णिच्प्रत्यये कृते पाठि इति नूतनो धातुः भवति, तस्यार्थः पढाना (हिन्दी) इति। तथा च पाठयति इति रूपं भवति। णिचश्च (१.३.७४) इति योगेन कर्तृगामिनि क्रियाफले आत्मनेपदम्, अकर्त्रभिप्राये क्रियाफले तु शेषात् कर्तरि परस्मैपदम् (१.३.७८) इत्यनेन परस्मैपदं भवति इति णिजन्तधातोः उभयपदविधानं भवति इति साधारणनियमः। तेन पाठ्यते इति रूपमपि भवति। यद्यपि क्वचित् अकर्त्रभिप्राये क्रियाफलेऽपि आत्मनेपदं भवति यथा भीस्म्योर्हेतुभये (१.३.६८) इत्यत्र। पाठयति इत्यत्र मूलस्य पठ् इत्यस्य भूवादयो धातवः (१.३.१) इत्यनेन धातुसंज्ञा भवति, पाठि इति णिजन्तस्य तु सनाद्यन्ता धातव (३.१.३२) इत्यनेन धातुसंज्ञा भवति इति ज्ञेयम्। व्याकरणशास्त्रं ससोपानक्रमं पठनीयम्। तस्मादेव अस्य प्रकरणस्य कृते भ्वादिप्रकरणादिज्ञानमावश्यकम्। अतः प्राक्तनपाठानां ज्ञानं समासाद्य अग्रिमपाठाः पठनीयाः।



## उद्देश्यानि

इमं पाठं पठित्वा भवताम् –

- णिच्प्रत्ययस्य कः अर्थः कथञ्च तस्य प्रयोगः इति ज्ञानं भविष्यति।
- णिच्प्रत्ययविधायकसूत्रार्थज्ञानं भविष्यति।
- णिच्प्रत्ययान्तरूपाणां प्रक्रियाज्ञानं भविष्यति।
- तत्तत्स्थलेषु विशेषसूत्राणां ज्ञानं भविष्यति।
- णिजन्तपदप्रयोगाय सामर्थ्यं स्यात्।



वाक्ये विविधानि कारकाणि भवन्ति। परन्तु यत् विना क्रियासिद्धिः नैव भवति तत् कर्तृकारकम् उच्यते इति भवन्तः कारकप्रकरणेषु अधीतवन्तः इति भावयामि। यथा रामः पठति इत्यत्र पठनक्रियासिद्धिः रामं विना नैव सम्भवति। क्रियायां कर्ता एव स्वतन्त्रतया विवक्षितो भवति। कर्मादि तु कर्त्रपेक्षितत्वात् स्वतन्त्रं भवितुं नार्हति। यथा क्रियया कर्तुः इष्टतमस्य कर्मसंज्ञा, क्रियायां कर्तुः प्रकृष्टोपकारकस्य करणसंज्ञा, दानादिक्रियया कर्तुः अभिप्रेतस्य सम्प्रदानसंज्ञा, कर्तुः अवधेः अपादानसंज्ञा, कर्तुः आधारस्य अधिकरणसंज्ञा भवति। तदेतत् सर्वं कारकं क्रियायां कर्त्रा विवक्षितं भवति। कर्ता तु न कस्यापि अधीनः। अतः स्वातन्त्र्येण विवक्षितस्य कारकस्य कर्तृसंज्ञा भवति, स्वतन्त्रः कर्ता इति योगेन। एतादृशस्यैव कर्तुः प्रेरकस्य कर्तृसंज्ञां हेतुसंज्ञां च विधातुम् अग्रिमसूत्रमारभ्यते-

## [२४.१] तत्प्रयोजको हेतुश्च॥ (१.४.५५)

**सूत्रार्थः –** कर्तुः प्रयोजको हेतुसंज्ञः कर्तृसंज्ञश्च स्यात्।

**सूत्रव्याख्या –** संज्ञासूत्रमिदं पदत्रयात्मकम्। तत्प्रयोजकः (१/१), हेतुः (१/१) च (अव्ययम्) इति सूत्रगतपदच्छेदः। तत्पदेन स्वतन्त्रः कर्ता (१.४.५४) इति पूर्वसूत्रात् कर्तृपदं गृह्यते। तस्य = कर्तुः प्रयोजकः तत्प्रयोजकः इति षष्ठी तत्पुरुषसमासः। यः प्रेरयति स प्रयोजकः प्रेरकः प्रवर्तयिता वा इति कथ्यते। यश्च प्रेरितो भवति स प्रयोज्यः प्रेरितः प्रवर्तितो वा इत्युच्यते। यथा यज्ञदत्तो देवदत्तेन ओदनं पाचयति इत्यत्र पाकक्रियायां यज्ञदत्तेन देवदत्तः प्रेरितो भवति, अतः स प्रयोज्य इति कथ्यते, यज्ञदत्तस्तु प्रेरयति, अतः स प्रयोजक इत्युच्यते। अस्य प्रयोजकस्यैव कर्तृसंज्ञा हेतुसंज्ञा च अनेन सूत्रेण विधीयते। हेतुसंज्ञायाः फलं – हेतुमति च (३.१.२६) इति सूत्रेण प्रयोजकव्यापारे णिच्प्रत्ययसिद्धिः। कर्तृसंज्ञायाः फलं तु – लः कर्मणि च भावे चाकर्मकेभ्यः इति सूत्रेण कर्तरि लडादिसिद्धिः। एवञ्च कर्तुः प्रयोजकस्य हेतुसंज्ञा कर्तृसंज्ञा च भवति इति सूत्रार्थः फलति।

**अत्र विशेषः –** णिजन्तस्थले प्रयोजककर्ता प्रयोज्यकर्ता च इति द्विविधः कर्ता भवति। व्यापारवान् कर्ता प्रयोज्यकर्ता भवति, प्रेरककर्ता च प्रयोजककर्ता भवति। देवदत्तः पचति, तं यज्ञदत्तः प्रेरयति– इत्यत्र पच्धातोः पाकानुकूलव्यापारः अर्थः, स च व्यापारः देववदत्तेऽस्ति। अतः देवदत्तः पाकानुकूलव्यापारवान्। अतः स कर्ता भवति किन्तु णिजन्तस्थले स प्रयोज्यकर्ता भवति। यतो हि अयं कर्ता प्रेरकेण प्रयोज्यो भवति। यज्ञदत्ते तु तादृशव्यापारो नास्ति अतः स कर्ता भवितुं नार्हति। तस्मात् तत्प्रयोजको हेतुश्च इत्यनेन यज्ञदत्तस्य हेतुसंज्ञया सह कर्तृसंज्ञापि विधीयते। अतः णिजन्तस्थले स कर्ता प्रयोजककर्ता इत्युच्यते। हेतुसंज्ञायाः फलं भियो हेतुभये षुक् इत्यादेः प्रवृत्तिः। कर्तृसंज्ञायाः फलं तु प्रयोजके वाच्ये सति लः कर्मणि च भावे चाकर्मकेभ्यः (३.४.६९)इत्यनेन कर्तरि लकारविधानम्।

अधुना हेतुसंज्ञायाः फलं प्रदर्श्यते–

## [२४.२] हेतुमति च (३.१.२६)

**सूत्रार्थः –** प्रयोजकव्यापारे प्रेषणादौ वाच्ये धातोर्णिच् स्यात्।



**सूत्रव्याख्या** – विधिसूत्रमिदं पदद्वयात्मकं वर्तते। हेतुमति (७/१) च (अव्ययम्) इति सूत्रगतपदच्छेदः। हेतुः (प्रयोजकः) आधारतया अस्य अस्ति इति मतुप्प्रत्यये हेतुमान्, तस्मिन् हेतुमति। धातोरेकाचो हलादेः क्रियासमभिहारे यङ् (३.१.२२) इत्यतः धातोः, सत्याप–पाश–रूप–वीणा–तूल–श्लोक–सेना–लोम–त्वच–वर्म–वर्ण–चूर्ण–चुरादिभ्यो णिच् (३.१.२५) इत्यतः णिच् इति पदमनुवर्तते। प्रत्ययः परश्च इत्युभयमधिकृतम्। हेतुमत्–शब्देन हेतोः (प्रयोजकस्य) व्यापारः अभिप्रेतोऽस्ति। स च व्यापारः प्रेरणादिः। एवञ्च प्रयोजककर्तुः प्रेरणादिव्यापारे वाच्ये सति धातोः णिच्प्रत्ययो भवति इति सूत्रार्थः सम्पद्यते। णिचः णकारचकारौ इतौ स्तः। अतः इकारमात्रं शिष्यते। सूत्रेणानेन णिच्प्रत्ययो विधीयते।

**अत्र विशेषः** – वस्तुतः भ्वादितः चुराद्यन्तं यावत् ये दशगणीया धातवो वर्तन्ते, तेभ्यः णिजन्तधातुः पृथक् नास्ति, अपि तु तेभ्यः णिच्प्रत्यये कृते सति ते नूतनरूपतां लभन्ते, तस्मात् ते एव णिजन्ताः इत्युच्यते। णिजन्तधातोः णिचश्च (१.३.७४) इत्यनेन उभयपदविधानं भवति इति ध्येयम्।

**उदाहरणम्** – भावयति ।

**सूत्रार्थसमन्वयः** – भवन्तं प्रेरयति इत्यर्थे भूधातोः णिचि अनुबन्धलोपे भू इ इति जाते णिचः णित्त्वात् अचो ञ्णिति (७.२.११५) इत्यनेन अजन्तलक्षणावृद्धौ औकारे एचोऽयवायावः (६.१.७८) इत्यनेन आवादेशे वर्णसम्मेलने च भावि इति जायते। तस्य च समुदायस्य सनाद्यन्ता धातव (३.१.३२) इत्यनेन धातुसंज्ञायां कर्तृत्वविवक्षायां च वर्तमाने लट् (३.२.१२३) इति योगेन लटि भावि ल् इति स्थितिः उत्पन्ना। ततः प्रथमपुरुषैकवचनविवक्षायां णिचश्च (१.३.७४) इति सूत्रेण परस्मैपदात्मनेपदयोः युगपत् प्राप्तयोः क्रियाफलस्य परगामित्वे शेषात् कर्तरि परस्मैपदम् (१.३.७८) इत्यनेन परस्मैपदविधानात् तिप्तस्झिसिप्थस्थमिब्वस्मस्–तातांझथासाथांध्वमिड्वहिमहिङ् (३.४.७८) इति योगेन लस्य स्थाने परस्मैपदसंज्ञकेषु तिबादिषु नवसु प्रत्ययेषु प्राप्तेषु प्रथमपुरुषैकवचनविवक्षायां तिपि अनुबन्धलोपे भावि ति इति जाते कर्तरि शप् (३.१.६८) इत्यनेन शपि अनुबन्धलोपे भावि अ ति इति जाते शपः शित्त्वात् तिङ्शित्सार्वधातुकम् (३.४.११३) इत्यनेन सार्वधातुकसंज्ञायां सार्वधातुकार्धधातुकयोः (७.४.८४) इत्यनेन इगन्ताङ्गस्य भावि इत्यस्य इकारस्य गुणे एकारे एचोऽयवायावः (६.१.७८) इत्यनेन एकारस्य स्थाने अयादेशे भाव् अय् अ ति इति जाते भावयति इति रूपं सिध्यति। कर्तृगामिनि क्रियाफले तु आत्मनेपदप्रत्ययः। तेन भावयते इत्यपि रूपं भवति इति णिजन्तस्थले द्विविधं रूपं भवति इति सम्यक् अवधार्यताम्।

अधुना भवतां सुबोधाय भूधातोः प्रत्येकं लकारेषु एकैकम् उदाहरणम् अधः प्रदर्श्यन्ते–

लिटि – भावयाञ्चकार–भावयाञ्चक्रे। भावयामास। भावयाम्बभूव।

लुटि – (परस्मै) भावयिता, भावयितारौ, भावयितारः। **भावयितासि**।

(आत्मने.) भावयिता, भावयितारौ, भावयितारः। **भावयितासे**।

लृटि – (परस्मै.) भावयिष्यति। (आत्मने.) भावयिष्यते।

लोटि – (परस्मै.) भावयतु–भावयतात्। (आत्मने.) भावयताम्।



लङि – (परस्मै.) अभावयत्। (आत्मने.) अभावयत।

विधिलिङि – (परस्मै.) भावयेत्। (आत्मने.) भावयेत।

आशीर्लिङि – (परस्मै.) भाव्यात्। (आत्मने.) भावयिषीष्ट।

भूधातोः णिचि लुङि अडागमे तिपि इतश्च (३.४.१००) इत्यनेन तिपः इकारस्य लोपे च्लौ अ भू इ च्लि त् इति जायते। ततः च्लेः स्थाने सिजादेशे प्राप्ते तं बाधित्वा णिश्रिद्रुस्रुभ्यः कर्तरि चङ् (३.१.४८) इत्यनेन ण्यन्तधातुत्वात् च्लेः स्थाने चङ्–आदेशे अनुबन्धलोपे अभू इ अ त् इति जाते **णिच्यच आदेशो न द्वित्वे कर्तव्ये** इति परिभाषया चङि (६.१.११) इत्यनेन भू इत्यस्य द्वित्वे पूर्वोऽभ्यासः (६.१.४) इत्यनेन च पूर्वभागस्य अभ्याससंज्ञायां ह्रस्वः (७.४.५९) इत्यनेन आद्यस्य भू इत्यस्य ऊकारस्य ह्रस्वे अभ्यासे चर्च (८.४.५४) इत्यनेन जश्त्वे अ बु भू इ अत् इति जायते। ततः द्वितीयस्य भू इत्यस्य ऊकारस्य अचो ञ्णिति (७.२.११५) इति योगेन वृद्धौ भौ इति जाते एचोऽयवायावः (६.१.७८) इत्यनेन आवादेशे अ बु भाव् इ अ त् इति जायते। ततः णौ चङ्युपधाया ह्रस्वः (७.४.१) इत्यनेन भाव् इत्यस्य उपधाभूतस्य आकारस्य ह्रस्वे अ बु भव् इ अ त् इति जाते णेरनिटि (६.४.५१) इत्यनेन णिचः इकारस्य लोपे अ बु भव् अ त् इति जाते सन्वल्लघुनि चङ्परेऽनग्लोपे (७.४.९३) इत्यनेन सन्वद्भावे अग्रिमसूत्रमारभ्यते –

## [२४.३] ओः पुयण्ज्यपरे॥ (३.४.८०)

**सूत्रार्थः –** सनि परे यदङ्गं तदवयवाभ्यासस्योकारस्य इत् स्यात् पवर्ग–यण्–जकारेषु अवर्णपरेषु परतः।

**सूत्रव्याख्या –** विधिसूत्रमिदं पदत्रयात्मकमस्ति। ओः (६/१), पुयण्जि (७/१), अपरे (७/१) इति सूत्रगतपदच्छेदः। पुश्च (पवर्गश्च) यण् च ज् च पुयण्ज् इति समाहारद्वन्द्वः, तस्मिन् पुयण्जि। अः (अकारः) परो यस्मात् स अपरः इति बहुव्रीहिः, तस्मिन् अपरे। अत्र लोपोऽभ्यासस्य (७.४.५८) इत्यतः अभ्यासस्य इति पदस्य, भृञामित् (७.४.७६) इत्यतः इत् इति पदस्य, सन्यतः (७.४.७९) इत्यतः सनि इति पदस्य च अनुवृत्तिर्भवति। अङ्गस्य (६.४.१) इत्यधिक्रियते। अङ्गस्य इति अवयवषष्ठी। पुयण्जि इति विशेष्यस्य अपरे इति विशेषणम्। उकारस्य षष्ठ्यन्तं रूपं भवति ओः इति। इत् इत्यस्य अर्थः ह्रस्वः इकारः। तथा च सनि परतः यदङ्गं भवति तस्य अवयवस्य अभ्यासस्य उकारस्य स्थाने इकारादेशः स्यात् पवर्गयण्जकारेषु अवर्णपरेषु परतः। सूत्रेणानेन इत्त्वं विधीयते।

**उदाहरणम्** – अबीभवत्।

**सूत्रार्थसमन्वयः –** तथा च अ बु भव् अ त् इति जाते ओः पुयण्ज्यपरे इति प्रकृतसूत्रेण बु इत्यस्य उकारस्य इत्त्वं भवति। यतो हि अत्र अभ्यासस्थः उकारोऽस्ति। किञ्च भकारः पवर्गीयवर्णः अकारपरकश्चास्ति। अपि च अत्र अङ्गं सन्परकमपि अस्ति। ततः दीर्घो लघोः (७.४.९४) इत्यनेन बेः इकारस्य दीर्घे सर्ववर्णसम्मेलने च अबीभवत् इति रूपं सिध्यति।

सूत्रस्यास्य अन्यानि उदाहरणानि ग्रन्थान्तरे द्रष्टव्यानि।





## पाठगतप्रश्नाः-१

१. कर्तुः प्रयोजकस्य कर्तृसंज्ञा भवति किम्।

२. हेतुसंज्ञा कस्य भवति।

३. णिच्प्रत्ययः कस्मिन्नर्थे भवति।

४. स्वार्थे णिच्प्रत्ययो भवति किम्।

५. हेतुमति च (३.१.२६) इति सूत्रे हेतुमत्–शब्देन किं विवक्षितम्।

६. णिचश्च (१.३.७४) इति योगेन किं भवति।

७. ओः पुयण्ज्यपरे इति योगस्य कोऽर्थः।

८. ओः पुयण्ज्यपरे इति सूत्रस्य किम् उदाहरणम्।

---

तिष्ठन्तं प्रेरयति इति विग्रहे ष्ठा गतिनिवृत्तौ इति धातोः णिचि स्था + इ इति स्थिते सूत्रमिदमारभ्यते –

## [२४.४] अर्तिह्रीव्लीरीक्नूयीक्ष्माय्यातां पुङ्णौ॥ (७.३.३६)

**सूत्रार्थः** – ऋ, ह्री, व्ली, री, क्नूयी, क्ष्मायी इत्येतेभ्यो धातुभ्यः आकारन्तधातुभ्यश्च पुगागमो भवति णिचि परतः।

**सूत्रव्याख्या** – विधिसूत्रमिदं पदत्रयात्मकम्। अर्तिह्रीव्लीरीक्नूयीक्ष्माय्याताम् (६/३), पुक् (१/१), णौ (७/१) इति सूत्रगतपदच्छेदः। अर्तिश्च ह्रीश्च व्लीश्च रीश्च क्नूयीश्च क्ष्मायीश्च आच्च तेषामितरेतरयोगद्वन्द्वे अर्तिह्रीव्लीरीक्नूयीक्ष्माय्यातः, तेषाम् अर्तिह्रीव्लीरीक्नूयीक्ष्माय्याताम्। पुकः ककार इत्संज्ञकः उकारश्च उच्चारणार्थकः, अतः प्–मात्रमवशिष्यते। कित्त्वात् आद्यन्तौ टकितौ (१.१.४६) इति परिभाषया पुक् अन्त्यावयवो भवति। अङ्गस्य (६.४.१) इत्यधिक्रियते। एवञ्च सूत्रार्थस्तावत्– ऋ, ह्री, व्ली, री, क्नूयी, क्ष्मायी इत्येतेभ्यो धातुभ्यः आकारन्तधातुभ्यश्च पुगागमो भवति णिच्प्रत्यये परतः। तथा च सूत्रेणानेन पुक्–आगमो विधीयते।

**उदाहरणम्** – स्थापयति।

**सूत्रार्थसमन्वयः** – तथा च स्थाधातोः णिचि स्था इ इति जाते प्रकृतसूत्रेण पुगागमो भवति। यतो हि स्थाधातुः आकारान्तधातुः अस्ति किञ्च ततः णिच्प्रत्ययोऽपि विहितोऽस्ति। ततः पुकः अनुबन्धलोपे स्थापि इति जाते सनाद्यन्ता धातव (३.१.३२) इत्यनेन धातुसंज्ञायां लटि तिपि शपि गुणे एकारे अयादेशे स्थापयति इति रूपं सिध्यति, पक्षे स्थापयते इत्यपि भवति। अन्यानि उदाहरणानि–

१. ऋ गतौ–अर्पयति, अर्पयते।



२. ह्री लज्जायाम्–ह्रेपयति, ह्रेपयते।

३. व्ली वरणे–व्लेपयति, व्लेपयते।

४. री गतिरेषणयोः–रेपयति, रेपयते।

५. क्नुयी शब्दे उन्दने च–क्नोपयति, क्नोपयते।

६. क्ष्मायी विधूनने–क्ष्मापयति, क्ष्मापयते।

अधः स्थाधातोः सर्वेषु लकारेषु उदाहरणानि प्रदर्श्यन्ते–

लिटि – स्थापयाञ्चकार–स्थापयाञ्चक्रे। स्थापयामास। स्थापयाम्बभूव।

लुटि – (परस्मै) स्थापयिता, स्थापयितारौ, स्थापयितारः। **स्थापयितासि**।

(आत्मने.) स्थापयिता, स्थापयितारौ, स्थापयितारः। **स्थापयितासे**।

लृटि – (परस्मै.) स्थापयिष्यति। (आत्मने.) स्थापयिष्यते।

लोटि – (परस्मै.) स्थापयतु–स्थापयतात्। (आत्मने.) स्थापयताम्।

लङि – (परस्मै.) अस्थापयत्। (आत्मने.) अस्थापयत।

विधिलिङि – (परस्मै.) स्थापयेत्। (आत्मने.) स्थापयेत।

आशीर्लिङि – (परस्मै.) स्थाप्यात्। (आत्मने.) स्थापयिषीष्ट।

लृङि – (परस्मै.) अस्थापयिष्यत्। (आत्मने.) अस्थापयिष्यत।

स्था–धातोः लुङि णिचि पुगागमे लुङि प्रथमपुरुषैकवचने तिपि च्लौ चङि णिलोपे अ स्थाप् अ त् इति स्थिते विशेषं दर्शयितुं सूत्रमिदमारभ्यते –

## [२४.५] तिष्ठतेरित्॥ (७.४.५)

**सूत्रार्थः –** उपधाया इदादेशः स्याच्चङ्परे णौ।

**सूत्रव्याख्या –** विधिसूत्रमिदं पदद्वयात्मकमस्ति। तिष्ठतेः (६/१), इत् (१/१) इति सूत्रगतपदच्छेदः। णौ चङ्युपधाया ह्रस्वः (७.४.५९) इत्यतः णौ, चङि, उपधायाः इत्येतेषां पदानाम् अनुवृत्तिर्भवति। तेन चङ्परके णिच्प्रत्यये परतः स्थाधातोः उपधायाः इकारादेशो भवति इति सूत्रार्थः सिध्यति।

**उदाहरणम् –** अतिष्ठिपत् ।

**सूत्रार्थसमन्वयः –** तथा च अ स्थाप् अ त् इति स्थिते स्थाप् इत्यत्र उपधाभूतस्य आकारस्य स्थाने इकारादेशे अ स्थिप् अ त् इति जायते। ततः चङि (६.१.११) इत्यनेन स्थिपः द्वित्वे हलादिः शेषः (७.४.६०) इत्यस्य बाधकेन शर्पूर्वाः खयः (७.४.६१) इत्यनेन थकारशेषे चर्त्वे च अ ति स्थिप् अ त् इति जाते आदेशप्रत्यययोः (८.३.५९) इत्यनेन सकारस्य षकारे अतिष्ठिपत् इति रूपं सिध्यति।



ज्ञानार्थकात् ज्ञापनार्थकात् च चुरादिगणीयात् ज्ञप्–धातोः कर्तृत्वविवक्षायां सत्यापपाशरूपवीणातूलश्लोकसेनालोमत्वचवर्मवर्णचूर्णचुरादिभ्यो णिच् इति स्वार्थिकणिचि, पुनश्च हेतमण्णिचि ज्ञप् इ इ इति जायते। ततः णेरनिटि (६.४.५१) इति स्वार्थकणिचः लोपे उपधावृद्धौ च ज्ञाप् इ इति जायते। तत्र ज्ञप मिच्च इति निर्देशात् ज्ञप्–धातोः मित्त्वम् अतिदिश्यते। तेन ज्ञप्–धातुः मित् भवति। अधुना मित्करणफलं प्रदर्शयितुम् अग्रिमसूत्रमारभ्यते –

## [२४.६] मितां ह्रस्वः॥ (६.४.९२)

**सूत्रार्थः** – घटादीनां ज्ञपादीनां चोपधायाः ह्रस्वः स्याण्णौ।

**सूत्रव्याख्या** – विधिसूत्रमिदं पदद्वयात्मकमस्ति। मिताम् (६/३), ह्रस्वः (१/१) इति सूत्रगतपदच्छेदः। ऊदुपधाया गोहः (६.४.८९), इत्यतः उपधायाः इति पदस्य, दोषो णौ (६.४.९०) इत्यतः णौ इति पदस्य च अनुवृत्तिर्भवति। तत्र ये मितः सन्ति ते धातुपाठे परिगणिताः सन्ति। ज्ञपादयो घटादयश्च मितो भवन्ति इति धातुपाठे दृश्यते। तत्र मित्त्वम् अतिदिश्यते इति अवधार्यताम्, न तु मकारः इत् यस्य धातोः स धातुः मित् इति ग्राह्यम्। यथा घट चेष्टायाम् इति धातौ घटादयो मितः इत्यनेन मित्त्वमतिदिश्यते। किञ्च ज्ञप मिच्च इति कथनेन ज्ञप्धातौ मित्त्वमतिदिश्यते। मित्त्वस्य फलं तु मितां ह्रस्वः (६.४.९२) इत्येकम्। अपरं तु चिण्णमुलोर्दीर्घोऽन्यतरस्याम् (६.४.९३) इत्यनेन विकल्पेन दीर्घादेशविधानं अघटि–अघाटि इत्यादौ।

**उदाहरणम्** – घटयति। ज्ञपयति।

**सूत्रार्थसमन्वयः** - एवञ्च ज्ञाप् इ इति जाते कित्वातिदेशे प्रकृतसूत्रेण ह्रस्वादेशे ज्ञपि इति जायते। ततः ज्ञपि इति समुदायस्य सनाद्यन्ता धातव (३.१.३२) इत्यनेन धातुसंज्ञायां लटि तिपि शपि गुणे अयादेशे ज्ञपयति इति रूपं भवति। लुङि तु च्लेः चङि द्वित्वे णिलोपे सन्वद्भावे सन्यतः इति इत्त्वे अजिज्ञपत् इति रूपं भवति।

एवमेव घटयति इत्यत्रापि ज्ञेयम्। लुङि तु दीर्घो लघोः (७.४.९४) इत्यस्य प्रवृत्तिः। तेन अजीघटत्, अजीघटत इति सिध्यति।

अधः ज्ञप्–धातोः सर्वेषु लकारेषु उदाहरणानि प्रदर्श्यन्ते–

लिटि – ज्ञपयाञ्चकार–ज्ञपयाञ्चक्रे। ज्ञपयामास। ज्ञपयाम्बभूव।

लुटि – (परस्मै) ज्ञपयिता, ज्ञपयितारौ, ज्ञपयितारः। **ज्ञपयितासि**।

(आत्मने.) ज्ञपयिता, ज्ञपयितारौ, ज्ञपयितारः। **ज्ञपयितासे**।

लृटि – (परस्मै.) ज्ञपयिष्यति। (आत्मने.) ज्ञपयिष्यते।

लोटि – (परस्मै.) ज्ञपयतु–ज्ञपयतात्। (आत्मने.) ज्ञपयताम्।

लङि – (परस्मै.) अज्ञपयत्। (आत्मने.) अज्ञपयत।

विधिलिङि – (परस्मै.) ज्ञपयेत्। (आत्मने.) ज्ञपयेत।



आशीर्लिङि – (परस्मै.) ज्ञप्यात्। (आत्मने.) ज्ञपयिषीष्ट।

लृङि – (परस्मै.) अज्ञपयिष्यत्। (आत्मने.) अज्ञपयिष्यत।

लुङि – (परस्मै.) अजिज्ञपत्, (आत्मने.) अजिज्ञपत।



## पाठगतप्रश्नाः-२

९. तिष्ठतेरित् इति सूत्रस्य कोऽर्थः।

१०. अर्तिह्रीव्लीरीक्नूयीक्ष्माय्यातां पुङ्णौ (७.३.३६) इति सूत्रेण किं विधीयते।

११.घटयति इत्यत्र उपधाह्रस्वः केन विधीयते।

१२.मितां ह्रस्वः इत्यस्य कोऽर्थः।

१३.ज्ञप्–धातोः मित्त्वं कथं भवति।

---

टु ओ श्वि गतिवृद्ध्योः धातोः णिचि लुङि प्रथमपुरुषैकवचने तिपि चङि अडागमे अश्वि इ अ त् इति जाते सूत्रमिदमारभ्यते–

## [२४.७] णौ च संश्चङोः॥ (६.१.३१)

**सूत्रार्थः –** सन्परे चङ्परे च णौ श्वयतेः सम्प्रसारणं वा स्यात्।

**सूत्रव्याख्या –** विधिसूत्रमिदं पदत्रयात्मकमस्ति। णौ (७/१) च (अव्ययम्) संश्चङोः (७/२) इति सूत्रगतपदच्छेदः। सन् च चङ् च संश्चङौ तयोः संश्चङोः इति इतरेतरयोगद्वन्द्वः। विभाषा श्वेः (६.१.३०) इति सूत्रस्य, ष्यङः सम्प्रसारणम् (६.१.१३) इत्यतश्च सम्प्रसारणम् इति पदस्य च अनुवृत्तिर्भवति। संश्चङोः णौ इत्यस्य विशेषणमस्ति। एवञ्च सन्परकः चङ्परकः च णिच् इत्यर्थः। ततः सन्परके णौ अथवा चङ्परके णौ श्विधातोः विकल्पेन सम्प्रसारणं भवति इति सूत्रार्थः। सूत्रेणानेन वैकल्पिकं सम्प्रसारणं विधीयते। श्विधातोः वकारः सम्प्रसारणी अस्ति, तस्य सम्प्रसारणे उकारो भवति, ततः सम्प्रसारणाच्च (६.१.१०८) इत्यनेन पूर्वरूपैकादेशे शु इति जायते इति ध्येयम्।

**उदाहरणम्** – अशूशवत् ।

**सूत्रार्थसमन्वयः –** एवञ्च अ श्वि इ अ त् इत्यवस्थायां वृद्धिसम्प्रसारणयोः युगपत् प्राप्तयोः **सम्प्रसारणं तदाश्रयं च कार्यं बलवत्** इति परिभाषया आदावेव सम्प्रसारणं भवति, अतः णौ च संश्चङोः इत्यनेन विकल्पेन सम्प्रसारणे उकारे अ शु इ इ अ त् इति जाते सम्प्रसारणाच्च (६.१.१०८) इत्यनेन पूर्वरूपैकादेशे अ शु इ अ त् इति जाते शु इत्यस्य चङि (६.१.११) इत्यनेन द्वित्वे दीर्घो लघोः (७.४.९४) इत्यनेन अभ्यासस्य दीर्घे अ शू शु इ अ त् इति जाते द्वितीयशोः उकारस्य अचो ञ्णिति (७.२.११५) इत्यनेन वृद्धौ एचोऽयवायावः (६.१.७८) इत्यनेन औकारस्य आवादेशे अ शू शाव् इ अ त्



इति जाते णौ चङ्युपधाया ह्रस्वः (७.४.१) इत्यनेन उपधाह्रस्वे, णेरनिटि (६.४.५१) इत्यनेन णिलोपे सर्ववर्णसम्मेलने च अशूशवत् इति रूपं सिध्यति।

दिवादिगणीयस्य शो तनूकरणे इति धातोः श्यन्तं प्रेरयति इत्यर्थे हेतुमति च (३.१.२६) इत्यनेन णिचि धातोः उकारस्य स्थाने आदेच उपदेशेऽशिति (६.१.४५) इत्यनेन आकारादेशे शा इ इति जाते अर्तिह्रीव्लीरीक्नूयीक्ष्माय्यातां पुङ्णौ (७.३.३६) इत्यनेन पुगागमे प्राप्ते सूत्रमिदमारभ्यते –

## [२४.८] शाच्छासाह्वाव्यावेपां युक्॥ (७.३.३७)

**सूत्रार्थः –** प्राप्तात्त्वानां शो–छो–षो–ह्वे–व्ये इत्येतेषां धातूनां किञ्च वेपाधात्वोः युगागमो भवति णिचि परतः।

**सूत्रव्याख्या –** विधिसूत्रमिदं पदद्वयात्मकमस्ति। शाच्छासाह्वाव्यावेपाम् (६/३), युक् (१/१) इति सूत्रगतपदच्छेदः। शाश्च छाश्च साश्च ह्वाश्च व्याश्च वेश्च पाश्च तेषामितरेतिरयोगद्वन्द्वे शाच्छासाह्वाव्यावेपाः, तेषाम् शाच्छासाह्वाव्यावेपाम्। युकः ककारः इत् अस्ति। अतः य्–इत्येव शिष्यते। कित्त्वात् आद्यन्तौ टकितौ (१.१.४६) इति परिभाषया अन्त्यावयवो भवति इति स्मर्तव्यम्। तथा च सूत्रेणानेन युक्–आगमो विधीयते। सूत्रमिदम् अर्तिह्रीव्लीरीक्नूयीक्ष्माय्यातां पुङ्णौ (७.३.३६) इत्यस्यापवादभूतम्।

**उदाहरणम् –** शाययति , शाययते।

**सूत्रार्थसमन्वयः –** एवञ्च शा इ इत्यवस्थायां प्रकृतसूत्रेण युकि अनुबन्धलोपे शाय् इ इति जाते समुदायस्य सनाद्यन्ता धातव (३.१.३२) इत्यनेन धातुसंज्ञायां लटि प्रथमपुरुषैकवचनविवक्षायां तिपि शपि गुणे एकारे अयादेशे शाययति, तप्रत्यये तु शाययते इति रूपद्वयं भवति।

भ्वादिगणायात् ओदितः ओ वै शोषणे इति धातोः वायन्तं प्रेरयति इत्यर्थे णिचि आदेच उपदेशेऽशिति (६.१.४५) इति सूत्रेण आत्त्वे वा इ इति स्थिते अर्तिह्रीव्लीरीक्नूयीक्ष्माय्यातां पुङ्णौ (७.३.३६) इति योगेन पुगागमे प्राप्ते सूत्रमिदमारभ्यते–

## [२४.९] वो विधूनने जुक्॥ (७.३.३८)

**सूत्रार्थः–** वातेर्जुक् स्यात् णौ कम्पेऽर्थे।

**सूत्रव्याख्या –** विधिसूत्रमिदं पदत्रयात्मकमस्ति। वः (६/१), विधूनने (७/१), जुक् (१/१) इति सूत्रगतपदच्छेदः। सूत्रेऽस्मिन् अर्तिह्रीव्लीरीक्नूयीक्ष्माय्यातां पुङ्णौ (७.३.३६) इति योगात् णौ इति पदस्यानुवृत्तिर्भवति। औ वै शोषणे इति धातोः ऐकारस्य आत्त्वे वा इति जाते तस्य षष्ठ्येकवचनान्तं रूपं वः इति। जुकः ककारः इत्संज्ञकः उकारश्च उच्चारणार्थः तस्मात् ज्–मात्रं शिष्यते। अर्तिह्रीव्लीरीक्नूयीक्ष्माय्यातां पुङ्णौ (७.३.३६) इति योगस्य अपवादभूतोऽयं योगः। विधूननं कम्पः। एवञ्च कम्पार्थे वैधातोः जुगागमो भवति णिच्प्रत्यये परतः इति सूत्रार्थः फलति। सूत्रेणानेन जुगागमो विधीयते।



**उदाहरणम्** – वाजयति, वाजयते ।

**सूत्रार्थसमन्वयः** – एवञ्च वायन्तं प्रेरयति इत्यर्थे वैधातोः ऐकारस्य आत्त्वे प्राप्तं पुगागमं बाधित्वा वो विधूनने जुक इति सूत्रेण जुगागमे अनुबन्धलोपे च वा ज् इ इति जाते प्रथमपुरुषैकवचनविवक्षायां तिपि शपि गुणे एकारे अयादेशे वाजयति इति रूपं सिध्यति, पक्षे वाजयते इत्यपि।

ण्यन्तस्थले कर्त्रभिप्राये क्रियाफले णिचश्च (१.३.७४) इत्यनेन आत्मनेपदं सिद्धमस्ति । किन्तु शेषात् कर्तरि परस्मैपदम् (१.३.७८) इत्यनेन अकर्त्रभिप्राये क्रियाफले परस्मैपदे प्राप्ते तत्रापि आत्मनेपदं भवतु इत्येतदर्थमयं योगः आरभ्यते–

## [२४.१०] लियः सम्माननशालीनीकरणयोश्च॥ (१.३.७० )

**सूत्रार्थः–** लीङ्लियोः ण्यन्तयोः आत्मनेपदं स्यात् अकर्तृगेऽपि फले पूजाभिभवयोः प्रलम्भने चार्थे।

**सूत्रव्याख्या –**विधिसूत्रेऽस्मिन् पदत्रयमस्ति। लियः (५/१), सम्माननशालीनकरणयोः (७/२), च (अव्ययम्) इति सूत्रगतपदच्छेदः। सम्माननं च शालीनीकरणं च सम्माननशालीनीकरणे इति इतरेतरयोगद्वन्द्वः, तयोः सम्माननशालीनीकरणयोः। अनुदात्तङित आत्मनेपदम् (१.३.१२) इत्यतः आत्मनेपदम् इति पदस्यानुवृत्तिर्भवति, णेरणौ यत्कर्म णौ चेत् स कर्ताऽनाध्याने (१.३.६७) इत्यतः णौ इत्यस्य चानुवृत्तिर्भवति। किञ्च चकारेण गृधिवञ्च्योः प्रलम्भने (१.३.६९) इत्यतः प्रलम्भने इत्यस्यानुकर्षणं भवति, लियः इत्यनेन लीलिङ्धात्वोः ग्रहणं भवति। अत्र सम्माननम् पूजा, शालीनीकरणम् अभिभवः, प्रलम्भनं वञ्चनम्। एवञ्च पूजाभिभववञ्चनार्थेषु ण्यन्तस्य लियः आत्मनेपदं स्यात् अकर्तृगेऽपि फले । तथा च सूत्रेणानेन आत्मनेपदं विधीयते।

**उदाहरणम्** – जटाभिः लापयते ।

**सूत्रार्थसमन्वयः** – प्रलम्भनाभिभवपूजासु लियो नित्यमात्त्वमशिति वाच्यम् इति वार्तिकेन लीधातोः पूजार्थे नित्यम् आत्त्वे णिचि परे च पुगागमे, लापि इत्यवस्थायां णिचश्च (१.३.७४) इत्यनेन उभयपदे प्राप्ते तं बाधित्वा लियः सम्माननशालीनीकरणयोश्च इति योगेन केवले आत्मनेपदे प्रथमपुरुषैकवचनविवक्षायां लटि तप्रत्यये शपि गुणे एकारे अयादेशे लापयते इति रूपं सिध्यति । जटाभिः लापयते – पूजाम् अधिगच्छति इत्यर्थः।

अभिभवार्थे– श्येनो वर्तिकाम् उल्लापयते, अभिभवतीत्यर्थः।

प्रलम्भनार्थे– बालम् उल्लापयते, वञ्चयतीत्यर्थः।

## [२४.११] लीलोर्नुग्लुकावन्यतरस्यां स्नेहनिपातने॥ (७.३.३९)

**सूत्रार्थः–** लीयतेः लातेश्च क्रमात् नुग्लुकौ आगमौ वा स्तः णौ स्नेहद्रवे।



**सूत्रव्याख्या –** विधिसूत्रेऽस्मिन् चत्वारि पदानि सन्ति। लीलोः (६/२), नुग्लुकौ (१/२), अन्यतरस्याम् (सप्तमीविभक्तिप्रतिरूपमकमव्ययम्), स्नेहनिपातने (७/१) इति सूत्रगतपदच्छेदः। ली च लाश्च इति इतरेतरयोगद्वन्द्वे लीलौ, तयोः लीलोः। स्नेहस्य निपातनम् स्नेहनिपातनम् इति षष्ठीतत्पुरुषः। अर्तिह्रीव्लीरीक्नूयीक्ष्माय्यातां पुङ्णौ (७.३.३६) इति योगात् णौ इत्यस्यानुवृत्तिर्भवति , अङ्गस्य (६.४.१) इत्यधिक्रियते। एवञ्च सूत्रार्थस्तावत् – स्नेहद्रवे ली इत्यङ्गस्य, ला इत्यङ्गस्य च यथासङ्ख्यं नुगागमः लुगागमश्च भवति णिचि परतः। नुक् लुक् इत्युभयत्रापि ककारौ इत्संज्ञकौ, उकारौ उच्चारणार्थकौ। अतः क्रमशः न् ल् इत्येव शिष्यते। तथा च सूत्रेणानेन नुग्लुकौ आगमौ विधीयेते।

**उदाहरणम् –** विलीनयति, विलाययति। विलालयति, विलापयति वा घृतम् इत्यत्र वि – उपसर्गपूर्वकलीधातोः विभाषा लीयतेः (६.१.५१) इत्यनेन विकल्पेन आत्त्वं भवति इति अस्मिन् पक्षे – विपूर्वकात् लीधातोः हेतुमति च (३.१.२६) इति योगेन णिचि आत्त्वे लीलोर्नुग्लुकावन्यतरस्यां स्नेहनिपातने (७.३.३९) इति योगेन लुकि विलालि इति जाते तिपि शपि गुणे एकारे अयादेशे विलालयति - विलालयते इति रूपं भवति, आत्त्वाभावपक्षे तु नुगागमे विलीनयति - विलीनयते इति रूपं सिध्यति।

स्नेहनिपातनार्थभिन्नार्थे तु न नुग्लुकौ भवतः किन्तु पुगागमः। एवञ्च विभाषा लीयतेः (६.१.५१) इत्यनेन आत्त्वविकल्पे अर्तिह्रीव्लीरीक्नूयीक्ष्माय्यातां पुङ्णौ (७.३.३६) इति योगेन पुकि वि-लापि इत्यस्य धातुसंज्ञायां विलापयति -विलापयते इति रूपं सिध्यति। किञ्च आत्त्वाभावपक्षे णिचि परे ली इत्यस्य ईकारस्य अचो ञ्णिति (७.२.११५) इत्यनेन वृद्धौ ऐकारादेशे आयादेशे वि-लायि इत्यस्य धातुसंज्ञायां विलाययति -विलाययते इति रूपं सिध्यति।



## पाठगतप्रश्नाः३

१४.श्यन्तं प्रेरयति इत्यर्थे किं रूपं भवति।

१५.लियः सम्माननशालीनकरणयोश्च इति सूत्रेण किं विधीयते।

१६.बालमुल्लापयते इत्यस्य कोऽर्थः।

१७.श्येनो वर्तिकामुल्लापयते इत्यस्य कोऽर्थः।

१८.लीलोर्नुग्लुकावन्यतरस्यां स्नेहनिपातने इति शास्त्रव्याख्यानावसरे साकल्येन कति रूपाणि प्रदर्शितानि सन्ति।

१९.वाजयति इत्यत्र मूलधातुः कः, णिजन्तधातुश्च कः।

---

ण्यन्तधातुभ्यः कर्त्रभिप्रायक्रियाफले णिचश्च (१.३.७४) इत्यनेन आत्मनेपदे सिद्धे अकर्त्रभिप्राये क्रियाफलेऽपि आत्मनेपदं भवति न तु परस्मैपदमिति नियमार्थमिदं सूत्रमारभ्यते–



## [२४.१२] भीस्म्योर्हेतुभये (१.३.६८)

**सूत्रार्थः** – प्रयोजकात् यदि भयस्मयौ गम्येते तर्हि ण्यन्ताभ्यां भीस्मिधातुभ्याम् आत्मनेपदं भवति।

**सूत्रव्याख्या** – विधिसूत्रमिदं पदद्वयात्मकम्। भीस्म्योः (६/२), हेतुभये (७/१) इति सूत्रगतपदच्छेदः। भीश्च स्मिश्च भीस्मी, तयोः भीस्म्योः। हेतोः भयम् इति पञ्चमीतत्पुरुषे हेतुभयम्, तस्मिन् हेतुभये। अनुदात्तङित आत्मनेपदम् (१.३.१२) इत्यस्मात् आत्मनेपदमनुवर्तते, किञ्च णेरणौ यत्कर्म णौ चेत् स कर्तानाध्याने (१.३.६७) इत्यतः णेः इत्यस्यानुवृत्तिर्भवति। एवञ्च पूर्वोक्तसूत्रार्थः फलति। सूत्रे भयग्रहणम् धात्वर्थस्योपलक्षणार्थम्। तेन भयशब्देन स्मयार्थस्यापि ग्रहणं भवति। तथा च सूत्रेणानेन आत्मनेपदं विधीयते।

**उदाहरणम्** – मुण्डो भापयते।

**सूत्रार्थसमन्वयः** – बिभ्यन्तं प्रेरयति इत्यर्थे हेतुमति च (३.१.२६) इत्यनेन भीधातोः णिचि भी इ इति स्थिते बिभेतेर्हेतुभये (६.१.५६) इति योगेन धातोः ईकारस्य स्थाने विकल्पेन आकारादेशे भा इ इति जाते अर्तिह्रीव्लीरीक्नूयीक्ष्माय्यातां पुङ्णौ (७.३.३६) इति योगेन पुगागमे भापि इति जाते कर्त्रभिप्राये क्रियाफले आत्मनेपदं प्राप्तं किञ्च अकर्त्रभिप्राये क्रियाफले परस्मैपदं प्राप्तमिति उभयत्रापि आत्मनेपदं विहितं भीस्म्योर्हेतुभये (१.३.६८) इति योगेन। एवञ्च भापि इत्यस्मात् लटि प्रथमपुरुषैकवचनविवक्षायां तिपि शपि गुणे अयादेशे **भापयते** इति रूपं भवति। यदा तु बिभेतेर्हेतुभये (६.१.५६) इत्यनेन आकारादेशो न भवति तस्मिन्पक्षे अग्रिमसूत्रमारभ्यते–

## [२४.१३] भियो हेतुभये षुक्॥ (७.३.४०)

**सूत्रार्थः** – ईकारान्तस्य भियः षुक् आगमः स्यात् णौ हेतुभये।

**सूत्रव्याख्या** – विधिसूत्रमिदं पदत्रयात्मकम्। भियः (६/१), हेतुभये (७/१) षुक् (१/१) इति सूत्रगतपदच्छेदः। अर्तिह्रीव्लीरीक्नूयीक्ष्माय्यातां पुङ्णौ (७.३.३६) इत्यतः णौ इत्यनुवर्तते। भी ई इति ईकारः प्रश्लिष्यते। एवञ्च ईकारान्तावस्थायां स्थितस्य भीधातोः षुगागमो भवति णिच्प्रत्यये परे। सूत्रमिदम् अचो ञ्णिति (७.२.११५) इति सूत्रस्य बाधकमस्ति। सूत्रमिदम् भीधातोः आत्तावस्थायां न प्रवर्तते। तथा च सूत्रेणानेन षुगागमो विधीयते।

**उदाहरणम्** – भीषयते।

**सूत्रार्थसमन्वयः** – एवञ्च हेतुभयार्थे गम्यमाने भीधातोः हेतुमण्णिचि भी इ इति जाते प्राप्तवृद्धिं बाधित्वा भियो हेतुभये षुक् इत्यनेन षुकि भीषि इति जायते। ततः भीस्म्योर्हेतुभये (१.३.६८) इत्यनेन कर्त्रभिप्रायाकर्त्रभिप्रायक्रियाफले आत्मनेपदं भवति, तेन भीषि इत्यस्मात् आत्मनेपदप्रत्यये प्रथमपुरुषैकवचनविवक्षायां तप्रत्यये शपि गुणे एकारे अयादेशे टित आत्मनेपदानां टेरे (३.४.७९) इत्यनेन टेः एत्त्वे भीषयते इति रूपं भवति। यदि च प्रयोजकात् भयं न प्रतीयते तदा न आत्मनेपदं, न



आत्त्वम्, न वा षुगागमः, आत्त्वाभावे पुगपि न भवति। तेन भी इ इति स्थिते तिपि शपि वृद्धौ आयादेशे भाययति कुञ्चिकया इति सिध्यति इत्येवंक्रमेण रूपत्रयं सिध्यति।

## [२४.१४] नित्यं स्मयतेः॥ (६.१.५७)

**सूत्रार्थः** – स्मयतेः एचः नित्यम् आत्त्वं स्यात् णौ हेतोः स्मये।

**सूत्रव्याख्या** – विधिसूत्रमिदं पदद्वयात्मकमस्ति। नित्यम् (१/१) स्मयतेः (६/१) इति सूत्रगतपदच्छेदः। आदेच उपदेशेऽशिति (६.१.४५) इत्यतः आत् एच् इत्यनयोः अनुवृत्तिर्भवति। चिस्फुरोर्णौ (६.१.५४) इत्यतः णौ इत्यस्य तथा बिभेतेर्हेतुभये (६.१.५६) इत्यतः हेतुभये इत्यस्य चानुवृत्तिर्भवति। स च हेतुभयशब्दः हेतुस्मयार्थस्यापि उपलक्षणमस्ति। तदनुसारं नित्यं स्मयतेः (६.१.५७) इत्यत्र स्मिधातोः सत्त्वात् हेतुभये इति शब्दस्य हेतुस्मये इत्यर्थो भवति। यतो हि स्मिधातोः भयार्थो भवितुं नार्हति। एवञ्च स्मिधातोः एचः स्थाने नित्यम् आकारादेशो भवति णिच्प्रत्यये परतः। विभाषा लीयतेः (६.१.५१) इत्यतः विभाषापदस्यानुवृत्तिः मास्तु इत्येतदर्थं सूत्रेऽस्मिन् नित्यम् इति पदमुपात्तम्। बिभेतेर्हेतुभये (६.१.५६) नित्यं स्मयतेः (६.१.५७) इति सूत्रद्वयाभ्यां विधीयमानमात्त्वं, भीस्म्योर्हेतुभये (१.३.६८) इत्यनेन विधीयमानमात्मनेपदं च प्रयोजकात् यदि भयं गम्यते तदैव भवति इति स्मर्तव्यम्।

**उदाहरणम्**– जटिलो **विस्मायते** । विस्मयमानं प्रेरयति इत्यर्थे विपूर्वकात् स्मिङ् ईषद्धसने इति धातोः णिचि वि स्मि इ इति जाते धातोः इकारस्य अचो ञ्णिति (७.२.११५) इत्यनेन वृद्धौ ऐकारे आयादेशे नित्यं स्मयतेः (६.१.५७) इत्यनेन नित्यम् आकारादेशे वि स्मा इ इति जायते। ततः आकारान्तत्वात् अर्तिह्रीव्लीरीक्नूयीक्ष्माय्यातां पुङ्णौ इत्यनेन पुगागमे वि स्मापि इति जाते भीस्म्योर्हेतुभये (१.३.६८) इत्यनेन नित्यम् आत्मनेपदे प्रथमपुरुषैकवचनविवक्षायां तप्रत्यये शपि गुणे एकारे विस्मापयते इति रूपं सिध्यति। यदि च हेतोः (प्रयोजकात्) भयं न गम्यते तर्हि नैव नित्यम् आत्मनेपदात्त्वं भवति, आत्त्वाभावे च न पुगागमः तेन स्माययति, स्माययते कुञ्चिकया एनम् इति प्रयोगो भवति।

षिधु संराद्धौ इति दिवादिगणीयधातोः सिध्यन्तं प्रेरयतीत्यर्थे णिचि सिध् इ इति स्थिते उपधागुणे सेध् इ इति जाते अग्रिमसूत्रमारभ्यते–

## [२४.१५] सिध्यतेरपारलौकिके॥ (६.१.४९)

**सूत्रार्थः** – ऐहलौकिकेऽर्थे विद्यमानस्य सिध्यतेरेच आत्त्वं स्याण्णौ।

**सूत्रव्याख्या** – विधिसूत्रमिदं पदद्वयात्मकस्ति। सिध्यतेः (६/१), अपारलौकिके (७/१) इति सूत्रगतपदच्छेदः। आदेच उपदेशेऽशिति (६.१.४५) इत्यतः आत् एचः इत्यनयोः, क्रीङ्जीनां णौ



इत्यतश्च णौ इत्यस्यानुवृत्तिर्भवति। एवञ्च परलोकासम्बन्ध्यर्थे अर्थात् इहलोकार्थे विद्यमाने सिध्–धातोः एचः स्थाने आकारादेशो भवति णिचि परे इति सूत्रार्थः। सूत्रेणानेन आत्त्वं विधीयते।

**उदाहरणम्** – अन्नं **साधयति**, निष्पादयीत्यर्थः।

**सूत्रार्थसमन्वयः** – तथा च सेध् इ इत्यत्र उपधाभूतस्य एकारस्य स्थाने आकारादेशो भवति अपारलौकिकार्थस्य गम्यमानत्वात् सिध्यतेरपारलौकिके (६.१.४९) इत्यनेन। तथा च साधि इत्यस्य सनाद्यन्ता धातव (३.१.३२) इत्यनेन धातुसंज्ञायां लटि प्रथमपुरुषैकवचविवक्षायां तप्रत्यये शपि गुणे एकारे अयादेशे साधयते, तिपि तु साधयति इति रूपं सिध्यति।

यदि च पारलौकिकार्थस्य प्रतीतिर्भवति तदा नास्य सूत्रस्य प्रवृत्तिर्भवति तेन सेधयते इत्येव रूपम्। तथा च प्रयोगः– तापसः सिध्यति तत्त्वं निश्चिनोति। तं प्रेरयति सेधयति तापसं तपः।

दुष वैकृत्ये इति दिवादिगणीयधातोः दुष्यन्तं प्रेरयति इत्यर्थे हेतुमति च (३.१.२६) इत्यनेन णिचि दुष् इ इति जाते पुगन्तलघूपधस्य च (७.३.८६) इत्यनेन लघूपधागुणे प्राप्ते सूत्रमिदमारभ्यते–

## [२४.१६] दोषो णौ (६.४.९०)।

**सूत्रार्थः** – दुष्धातोः उपधायाः स्थाने ऊत् इत्यादेशो णिच्प्रत्यये परतः।

**सूत्रव्याख्या** –विधिसूत्रमिदं पदद्वयात्मकमस्ति। दोषः (६/१), णौ (७/१) इति सूत्रगतपदच्छेदः। दोषः दुष्धातोः लघूपधगुणनिर्देशः। ऊदुपधाया गोहः (६.४.८९) इत्यतः ऊत् , उपधायाः इत्यनयोरनुवृत्तिर्भवति। एवञ्च सूत्रार्थः सिध्यति। सूत्रेणानेन ऊदादेशो विधीयते।

**उदाहरणम्** – दूषयते, दूषयति।

**सूत्रार्थसमन्वयः** – तथा च दुष्धातोः णिचि लघूपधगुणे प्राप्ते तं बाधित्वा दोषो णौ इत्यनेन उपधाभूतह्रस्व–उकारस्य स्थाने दीर्घ–ऊकारे दूषि जाते ततः तिपि शपि गुणे एकारे अयादेशे दूषयति , तप्रत्यये तु दूषयते इति रूपम् इत्याहत्य रूपद्वयं सिध्यति।

चित्तविरागार्थे तु विकल्पेन अयम् ऊदादेशो भवति। तेन चित्तं दूषयति, दोषयति वा कामः इत्यत्र तु चित्तविरागार्थोऽस्ति इति हेतोः वा चित्तविरागे (६.४.९१) इत्यनेन विकल्पेन दुष्धातोः उपधायाः स्थाने उकास्य ऊत् इति दीर्घादेशे दूषयति इति रूपं सिध्यति, यदा तु न ऊदादेशः तदा दुष्धातोः णिचि दुष् इ इति जाते गुणे ओकारे तिपि शपि गुणे अयादेशे दोषयति इति रूपं भवति इति साकल्येन रूपद्वयं सिध्यति।

अदादिगणीयात् इण् गतौ इति धातोः अयन्तं प्रेरयति इत्यर्थे णिचि इ इ इति जाते सूत्रमिदमारभ्यते –



## [२४.१७] णौ गमिरबोधने॥ (२.४.४६)।

**सूत्रार्थः** – अबोधनार्थे गम्यमाने इण्धातोः स्थाने गमि इत्यादेशो भवति णिचि परे।

**सूत्रव्याख्या** – विधिसूत्रमिदं पदत्रयात्मकमस्ति। णौ (७/१), गमिः (१/१), अबोधने (७/१) इति सूत्रगतपदच्छेदः। न बोधनम् इति नञ्तत्पुरुषे अबोधनम् , तस्मिन् अबोधने। इणो गा लुङि (२.४.४५) इत्यतः इणः इति पदमनुवर्तते। तेन सूत्रार्थः सिध्यत्येव। गमेः इकार उच्चारणार्थः, गम्मात्रं शिष्यते। बोधनार्थे अयमादेशो न भवति इति धेयम्। तथा च सूत्रेणानेन गमि इत्यादेशो विधीयते।

**उदाहरणम्** – गमयति।

**सूत्रार्थसमन्वयः** – तथा च इण्धातोः णिचि णौ गमिरबोधने इत्यनेन गमि इत्यादेशे अनुबन्धलोपे च गम् इ इति जायते। ततः अत उपधायाः (७.२.११६) इत्यनेन उपधाभूतस्य अकारस्य वृद्धौ जनीजॄष्क्नसुरञ्जोऽमन्ताश्च इति गणसूत्रेण मित्संज्ञायां मिद्वद्भावे वा मितां ह्रस्वः (६.४.९२) इत्यनेन उपधाभूतस्य आकारस्य ह्रस्वे गमि इत्यस्यैव सनाद्यन्ता धातव (३.१.३२) इत्यनेन धातुसंज्ञायां तिपि शपि गुणे एकारे अयादेशे गमयति इति रूपं सिध्यति, पक्षे गमयते इत्यपि भवति।
बोधनार्थे तु नायमादेशः तेन प्रत्याययति इत्येव रूपम्, पक्षे प्रत्याययते इत्यपि भवति।

नित्यमधिपूर्वकात् इङ् अध्ययने इति अदादिगणीयधातोः अधीयमानं प्रेरयति इत्यर्थे हेतुमति च (३.१.२६) इति णिचि अधि इ इ इति स्थिते अग्रिमसूत्रमिदमारभ्यते–

## [२४.१८] क्रीङ्जीनां णौ (६.१.४८)।

**सूत्रार्थः** – क्री–इङ्–जिधातुभ्यः एचः स्थाने आकारादेशो भवति णिचि परतः।

**सूत्रव्याख्या** – विधिसूत्रमिदं पदद्वयात्मकमस्ति। क्रीङ्जीनाम् (६/३) , णौ (७/१) इति सूत्रगतपदच्छेदः। क्रीश्च इङ् च जिश्च तेषामितरेतरयोगद्वन्द्वे क्रीङ्जयः तेषां क्रीङ्जीनाम्। आदेच उपदेशेऽशिति (६.१.४५) इत्यस्मात् आत्, एचः इति पदद्वयस्यानुवृत्तिर्भवति। एवं सूत्रार्थः सिध्यति।

**उदहरणम्** – अध्यापयति।

**सूत्रव्याख्या** – एवञ्च अधिपूर्वकात् इङ्धातोः णिचि अधि इ इ इति स्थिते धातोः इकारस्य क्रीङ्जीनां णौ इत्यनेन आत्त्वे अधि आ इ इति जाते अर्तिह्रीव्लीरीक्नूयीक्ष्माय्यातां पुङ्णौ (७.३.३६) इति योगेन पुगागमे अनुबन्धलोपे अधि आपि इति जाते ततः यणि अध्यापि इति समुदायस्य सनाद्यन्ता धातव (३.१.३२) इत्यनेन धातुसंज्ञायां लटि तिपि शपि गुणे एकारे तस्य च अयादेशे अध्यापयति इति रूपं सिध्यति, पक्षे अध्यापयते इत्यपि भवति।

एवमेव क्रीणन्तं क्रयमाणं वा प्रेरयति इत्यर्थे डुक्रीञ् द्रव्यविनिमये इति धातोः णिचि आत्त्वे पुगागमे तिपि शपि गुणे एकारे अयादेशे क्रापयति इति रूपं सिध्यति, पक्षे क्रापयते इत्यपि भवति। जि जये धातोः जयन्तं प्रेरयति इत्यर्थे णिचि आत्त्वे पुगागमे तिपि शपि गुणे एकारे अयादेशे जापयति इति रूपं सिध्यति, पक्षे जापयते इत्यपि भवति।



बोधसौकर्याय अत्र कानिचित् णिजन्तरूपाणि लटि लुङि च अधः तालिकया प्रदर्श्यन्ते –

| धातुः | ण्यन्तार्थः | सामान्यरूपाणि | णि.लटि रूपाणि | णि.लुङि.रूपाणि |
|---|---|---|---|---|
| अद् | खिलाना | अत्ति | आदयति | आदिदत् |
| कृ | कराना | करोति | कारयति | अचीकरत् |
| क्री | खरीदवाना | क्रीणाति | क्रापयति | अचिक्रपत् |
| क्रीड् | खेलाना | क्रीडति | क्रीडयति | अचिक्रीडत् |
| खाद् | खिलाना | खादति | खादयति | अचीखदत् |
| गम् | भिजवाना | गच्छति | गमयति | अजीगमत् |
| ग्रह् | ग्रहण करवाना | गृह्णाति | ग्राहयति | अजिग्रहत् |
| चल् | चलाना | चलति | चालयति | अचीचलत् |
| जन् | पैदा करना | जायते | जनयति | अजीजनत् |
| जीव् | जिलाना | जीवति | जीवयति | अजिजीवत् |
| ज्ञा | बोध करना | जानाति | ज्ञापयति | अजिज्ञपत् |
| तुष् | प्रसन्न करना | तुष्यति | तोषयति | अतूतुषत् |
| त्यज् | छुडाना | त्यजति | त्याजयति | अतित्यजत् |
| दा | दिलवाना | ददाति | दापयति | अदीदपत् |
| दृश् | दिखाना | पश्यति | दर्शयति | अदीदृशत् |
| नम् | झुकाना | नमति | नामयति | अनीनमत् |
| नश् | नष्ट कराना | नश्यति | नाशयति | अनीनशत् |
| पच् | पकवाना | पचति | पाचयति | अपीपचत् |
| पठ् | पढाना | पठति | पाठयति | अपीपठत् |
| पा | पिलाना | पिबति | पाययति | अपीपबत् |
| पुष् | पुष्ट करना | पुष्यति | पोषयति | अपूपुषत् |
| बोध् | बोध कराना | बुध्यति | बोधयति | अबूबुधत् |
| मिल् | मिलाना | मिलति | मेलयति | अमीमिलत् |
| मुद् | प्रसन्न करना | मोदते | मोदयति | अमूमुदत् |



| | | | | |
|---|---|---|---|---|
| यज् | यज्ञ करवाना | यजति | याजयति | अयीयजत् |
| युज् | मिलवाना | युनक्ति | योजयति | अयूयुजत् |
| रुद् | रुलाना | रोदिति | रोदयति | अरूरुदत् |
| लभ् | प्राप्त कराना | लभते | लम्भयति | अललम्भत् |
| लिख् | लिखाना | लिखति | लेखयति | अलीलिखत् |
| वच् | कहलवाना | वक्ति | वाचयति | अवीवचत् |
| वस् | वास कराना | वसति | वासयति | अवीवसत् |
| वृध् | बढाना | वर्धते | वर्धयति | अवीवृधत् |
| शी | सुलाना | शेते | शाययति | अशीशयत् |
| श्रु | सुनाना | श्रृणोति | श्रावयति | अशुश्रवत् |
| स्मृ | स्मरण करना | स्मरति | स्मारयति | असस्मरत् |
| हन् | मरवाना | हन्ति | घातयति | अजीघतत् |
| हस् | हसाना | हसति | हासयति | अजीहसत् |



## पाठगतप्रश्नाः-४

२०.भापयते इत्यत्र आत्त्वं कुतः।

२१.सिध्यतेरपारलौकिके इत्यस्य उदाहरणं किम्।

२२.दुष्यन्तं प्रेरयति इत्यर्थे णिचि किं रूपम्।

२३.इण् गतौ धातोः अबोधनार्थे बोधनार्थे च णिचि किं रूपम्।

२४.अधीयमानं प्रेरयति इत्यर्थे किं रूपं भवति।

२५.क्रापयति इत्यस्य कोऽर्थः इति लिखत।

२६.नित्यं स्मयतेः (६.१.५७) इत्यस्य किम् उदाहरणम्।

२७.विस्माययति कुञ्चिकया एनम् इत्यादौ कुतो न नित्यम् आत्त्वम्।





## पाठसारः

समासेन अस्य पाठस्य मुख्यविषयः अत्र उपन्यस्यते। भ्वादितः चुरादिं यावत् ये धातवः वर्तन्ते तेषां भूवादयो धातवः (१.३.१) इत्यनेन धातुसंज्ञा भवति। ते धातवः दशसु गणेषु विभक्ताः सन्ति इति हेतोः ते दशगणीया धातवः इत्युच्यन्ते। तेभ्य एव धातुभ्यो प्रेरणार्थे णिच्प्रत्यये कृते सति तेषां नूतनानां शब्दानां धातुसंज्ञा सनाद्यन्ता धातव (३.१.३२)इत्यनेन भवति इति पार्थक्यं सम्यक् अवधेयम्। अपरञ्च णिच्प्रत्ययः स्वार्थ–प्रेरणार्थभेदेन द्विविधोऽस्ति। अत्र तु स्वार्थकणिच् नैव चर्चाविषयः, अपि तु प्रेरणार्थक एव इत्यपि सम्यक् ज्ञेयम्। किञ्च णिच्प्रत्ययः नित्य एव भवति इत्येवं नियमो नास्ति। अतः पक्षे वाक्यमपि साधु भवति। तस्मात् पठ्धातोः णिच्प्रत्यये यथा पाठयति इति पदं साधु तथैव पठितुं प्रेरयति इति वाक्यमपि साधु। अस्मिन् पाठे आदौ णिच्प्रत्ययान्तरूपं कथं निष्पद्यते इति ससूत्रं प्रदर्श्य णिजन्तधातोः लुङि विशेषाय ओः पुयण्ज्यपरे इति योगो व्याख्यातः। ततः पुक्–युक्–जुक्–आगमविधायकसूत्राणि सोदाहरणं व्याख्यातानि। ततः णिच्परे सति कदाचित् धातोः उपाधायाः दीर्घो भवति, कदाचिद्वा उपधायाः ह्रस्वो भवति, कदाचिच्च उपधाया ऊत्त्वं भवति इत्यादिविषयाः तत्तत्सूत्राणाम् तत्तदुदाहरणेषु प्रदर्शिताः सन्ति। ततः ली–लाधात्वोः विषये , भी–स्मिधात्वोः विषये च दीर्घचर्चा विहिता। ततः साधयति, दूषयति, अध्यापयति, वाजयति, गमयति इत्येतेषां अस्मद्व्यवहृतशब्दानां प्रक्रिया अपि तत्तत्सूत्रेषु प्रदर्शिताः सन्ति।



## पाठान्तप्रश्नाः

१. भावयति इति रूपं साधयत।
२. तनोर्यकि इति सूत्रं सोदाहरणं व्याख्यात।
३. ओः पुयण्ज्यपरे इति योगो व्याख्येयः।
४. णौ च संश्चङोः इति शास्त्रं व्याख्यात।
५. क्रीङ्जीनां णौ इति न्यासस्य उदाहरणानां प्रक्रियाः प्रदर्शनीयाः।
६. गमयति इति रूपं ससूत्रं व्याख्यात।
७. भीधातुरूपविषये टिप्पणी लेखनीया।
८. सिध्यति इति रूपं साधयत।
९. दोषो णौ इति सूत्रस्थोदाहरणानि विशदीकरणीयानि।
१०. पाठप्रदर्शितलीलाधातुरूपविषये टिप्पणी लेखनीया।
११. स्तम्भयोः स्थितान् परस्परसम्बद्धान् मेलयत।

| | क-स्तम्भः | | ख-स्तम्भः |
|---|---|---|---|



| | | | |
|---|---|---|---|
| १ | तत्प्रयोजको हेतुश्च | a | उपधाह्रस्वः |
| २ | क्रीङ्जीनां णौ | b | तायते |
| ३ | प्रत्याययति | c | बोधयति |
| ४ | भीस्म्योर्हेतुभये | d | उभयपदविधानम् |
| ५ | शाच्छासाह्वाव्यावेपां युक् | e | शाययति |
| ६ | शालीनीकरणम् | f | उपधावृद्धिनिषेधः |
| ७ | नोदात्तोपदेशस्य मान्तस्यानाचामेः | g | अभिभवः |
| ८ | तनोर्यकि | h | आत्मनेपदम् |
| ९ | मितां ह्रस्वः | i | अध्यापयति |
| १० | णिचश्च | j | कर्तृसंज्ञा |



## पाठगतप्रश्नानामुत्तराणि

### उत्तराणि–१

१. आम्, भवति।

२. कर्तुः प्रयोजकस्य।

३. प्रेरणार्थे।

४. आम्, भवति।

५. प्रयोजककर्तुः व्यापारः।

६. परस्मैपदात्मनेपदविधानं भवति।

७. सनि परे यदङ्गं तदवयवाभ्यासस्योकारस्य इत् स्यात् पवर्ग–यण्–जकारेषु अवर्णपरेषु परतः।

८. अबीभवत्।

### उत्तराणि–२

९. चङ्परके णौ परे सति स्थाधातोः उपधायाः इकारादेशो भवति।

१०. पुगागमः।

११. मितां ह्रस्वः।

१२. घटादीनां ज्ञपादीनां चोपधायाः ह्रस्वः स्याण्णौ।



१३. ज्ञप मिच्च इति निर्देशात्।

**उत्तराणि–३**

१४. शाययति, शाययते।

१५. आत्मनेपदम्।

१६. बालं वञ्चयति।

१७. श्येनः वर्तिकाम् अभिभवति।

१८. अष्टौ।

१९. ओ वै शोषणे इति मूलधातुः, वाजि इति णिजन्तधातुः।

**उत्तराणि–४**

२०. बिभेतेर्हेतुभये (६.१.५६)।

२१. अन्नं साधयति, निष्पादयतीत्यर्थः।

२२. दूषयति, दोषयति।

२३. अबोधनार्थे-गमयति। बोधनार्थे तु प्रत्याययति।

२४. अध्यापयति।

२५. क्रीणन्तं क्रयमाणं वा प्रेरयति।

२६. जटिलो विस्मायते ।

२७. हेतोः भयं न गम्यते इति कारणात्।

**स्तम्भप्रश्नानाम् सूचकोत्तराणि –**

१०.१-j, २-i, ३-c, ४-h, ५-e, ६-g, ७-f, ८-b, ९-a, १०-d

## ॥इति चतुर्विंशः पाठः ॥



# २५

# सन्नन्तप्रकरणम्

## प्रस्तावना

सन् इति एकः प्रत्ययः। सन् अन्ते यस्य धातोः स धातुः सन्नन्तो भवति । तेषां धातूनां प्रकरणम् व्याकरणे सन्नन्तप्रकरणम् इति शब्देन व्यवह्रियते। सन्नन्तधातुः भ्वादिधातुभ्यः पृथक् कश्चित् धातुः नास्ति, अपि तु भ्वादितः चुरादिं यावत् ये दशगणीया धातवो वर्तन्ते तेभ्य एव परं यदा इच्छार्थे सन्प्रत्ययो भवति तदा ते एव धातवः सन्नन्तरूपतां लभन्ते। तेषां च सन्नन्तशब्दानां सनाद्यन्ता धातव (३.१.३२) इत्यनेन धातुसंज्ञा भवति। यथा पठ व्यक्तायां वाचि इति भ्वादिगणीयो धातुः वर्तते, तस्मात् धातोः परं यदा सन्प्रत्ययो भवति तदा सः पिपठिष इति नूतनरूपतां लभते, स च सन्नन्तधातुरित्युच्यते। एवञ्च पिपठिष इति सन्नन्तस्य धातुसंज्ञा सनाद्यन्ता धातव (३.१.३२) इत्यनेन भवति, तस्य मूलस्य पठ् इत्यस्य तु भूवादयो धातव (१.३.१) इत्यनेन धातुसंज्ञा इति पार्थक्यं सम्यक् विज्ञेयम्।



## उद्देश्यानि

इमं पाठं पठित्वा भवान् –

➢ सन्नन्तधातोः कथं निष्पत्तिर्भवति इति ज्ञास्यति।
➢ सन्प्रत्ययविधायकसूत्रस्य अर्थमधिगमिष्यति।
➢ पिपठिषतीति रूपसिद्धिं ज्ञास्यति तज्ज्ञात्वा च अन्यदपि रूपं साधयितुं शक्ष्यति।
➢ सनि परतः तत्तत्स्थलेषु कानिचित् विशेषकार्याणि भवन्ति, तज्ज्ञास्यति।
➢ लोकव्यवहारोपयोगिशब्दानां प्रक्रिया अपि तत्तत्सूत्रेषु दत्ताः सन्ति, तज्ज्ञास्यति।

## [२५.१] सनाद्यन्ता धातवः॥ (३.१.३२)

**सूत्रार्थः–** सनादयः णिङन्ताः प्रत्ययाः अन्ते येषां ते धातुसंज्ञकाः भवन्ति।

**सूत्रव्याख्या–** संज्ञासूत्रेऽस्मिन् पदद्वयमस्ति। सनाद्यन्ताः (१/३), धातवः (१/३) इति सूत्रगतपदच्छेदः। सन् आदिः येषां ते सनादयः इति बहुव्रीहिसमासः। सनादयः अन्ते येषां ते सनाद्यन्ताः इति बहुव्रीहिसमासः।

सन्–क्यच्–काम्यच्–क्यङ्–क्यषोऽथाचारक्विब्–णिज्–यङस्तथा।



यगायेयङ्–णिङ् चेति द्वादशाऽमी सनादयः।।

सन् क्यच् काम्यच् क्यङ् क्यष् आचारक्विप् णिच् यङ् यक् आय ईयङ् णिङ् इति एषाम् आदिः सन् अस्ति। अतः एते सनादयः। एते यस्य अन्ते भवन्ति स सनाद्यन्तः भवति। यथा कमेर्णिङ् इति सूत्रेण कम्–धातुतः णिङ् प्रत्ययः विधीयते। तदा कम्+णिङ् इति जाते प्रक्रियया कामि इति शब्दः निष्पद्यते। अस्य अन्ते णिङ् अस्ति। अतः अयं सनाद्यन्तः शब्दः। तस्य अनेन सूत्रेण धातुः इति संज्ञा विधीयते। सनादयः णिङन्ताः प्रत्ययाः अन्ते येषां ते धातुसंज्ञकाः भवन्तीति सूत्रस्यास्यार्थः।

## [२५.२] धातोः कर्मणः समानकर्तृकादिच्छायां वा॥ (३.१.७)

**सूत्रार्थः–** इषिकर्मण इषिणैककर्तृकाद्धातोः सन्प्रत्ययो वा स्यादिच्छायाम्।

**सूत्रव्याख्या –** विधिसूत्रेऽस्मिन् पञ्च पदानि सन्ति। धातोः (५/१), कर्मणः (५/१), समानकर्तृकात् (५/१), इच्छायाम् (७/१), वा (अव्ययम्) इति सूत्रगतपदच्छेदः। समानः कर्ता यस्य सः समानकर्तृकः इति बहुव्रीहिसमासः, तस्मात् समानकर्तृकात्। गुप्तिज्किद्भ्यः सन् (३.१.५) इत्यतः सन् इति पदम् अनुवर्तते।

इष्–धातोः अर्थः इच्छा, अतः इष्–धातुः इच्छार्थकोऽस्ति। तस्य च इष्धातोः कर्म अस्ति यो धातुः अर्थात् इच्छार्थक–इष्धातुकर्मीभूतात् धातोः, किञ्च इच्छायाः यः कर्ता सैव कर्ता यस्य धातोः, तादृशधातोः अर्थात् इच्छासमानकर्तृकात् धातोः परं सन्प्रत्ययो भवति इच्छार्थे। स च प्रत्ययो विकल्पेन विधीयते। एवञ्च कस्माच्चित् धातोः परं तदैव सन्प्रत्ययो भवति यदा इमौ विषयौ तत्र वर्तेयाताम्। प्रथमं हि यस्माद्धातोः परं सन्प्रत्ययो भवति अवश्यमेव स धातुः इष्धातोः कर्म भवेत्। अपरं तु इष्–धातोः यः कर्ता सैव कर्ता इष्धातुकर्मीभूतधातोरपि भवेत्। पश्यतु – देवदत्तः पठितुम् इच्छति इत्यत्र इष्धातोः यः कर्ता (देवदत्तः) सैव कर्ता पठ्धातोरपि। किञ्च, पठ्धातुः इष्धातोः कर्मापि अस्ति। अतः पठ्धातोः सन्प्रत्ययो विधीयते चेत् पिपठिषति इति रूपं भवति। सूत्रेऽस्मिन् विकल्पार्थकवा–ग्रहणात् विकल्पेन सन् प्रत्ययो विधीयते अतः सन्प्रत्ययाभावे पठितुम् इच्छति इति वाक्यमपि साधु भवति।

**उदाहरणम् –** पिपठिषति।

**सूत्रार्थसमन्वयः –** पठितुम् इच्छति इति विग्रहे पठ्धातोः धातोः कर्मणः समानकर्तृकादिच्छायां वा इति सूत्रेण सन्प्रत्ययो भवति। यतः इष्धातोः यः कर्ता सैव कर्ता पठ्धातोरपि अस्ति किञ्च पठ्धातुः इष्धातोः कर्मापि अस्ति। ततः सनः नकारस्य हलन्त्यमिति सूत्रेण इत्संज्ञायां तस्य लोपः इत्यनेन लोपे पठ् स इति जाते धातोः इत्यधिकारे सन्प्रत्ययस्य पठितत्वात् धातोः विहितत्वात् च आर्धधातुकं शेषः इत्यनेन सनः आर्धधातुकत्वे आर्धधातुकस्येड्वलादेः इत्यनेन इडागमे अनुबन्धलोपे च पठ् इस इति जाते अग्रिमसूत्रमारभ्यते–



## [२५.३] सन्यङोः॥ (६.१.९)

**सूत्रार्थः –** सन्नन्तस्य यङन्तस्य च प्रथमैकाचो द्वे स्तः अजादेस्तु द्वितीयस्य।

**सूत्रव्याख्या –** विधिसूत्रमिदं एकपदात्मकमस्ति। सन्यङोः इति षष्ठीद्विवचनान्तम्। सन् च यङ् च तयोः इतरेतरयोगद्वन्द्वे सन्यङौ, तयोः सन्यङोः। एकाचो द्वे प्रथमस्य इति अजादेर्द्वितीयस्य इति च सूत्रे अधिक्रियेते। सन् यङ् इत्युभौ प्रत्ययौ। अतः प्रत्ययग्रहणे तदन्ता ग्राह्याः इति नियमेन सन् इत्यनेन सन्नन्तं गृह्यते, यङ् इत्यनेन च यङन्तं गृह्यते। सन्नन्तस्य यङन्तस्य च प्रथम–एकाच्–भागस्य द्वित्वं भवति यदि धातुः अजादिर्भवति तर्हि द्वितीय–एकाच्–भागस्य द्वित्वं भवति इति सूत्रस्य अर्थः। अर्थात् हलादिधातुषु प्रथमैकाचो द्वित्वं भवति, अजादिधातुषु तु द्वितीयैकाचो द्वित्वम् इति पार्थक्यम्। एवञ्च सूत्रेणानेन द्वित्वं विधीयते।

**अत्र विशेषः –** सन्नन्तरूपस्य कृते आदौ सन्प्रत्ययस्य निर्णयः करणीयः। ततः इड्विषये चिन्ता कार्या। यदि मूलधातुः सेट् भवति तर्हि इड्भवति। अन्यथा न। सन् आर्धधातुकप्रत्यय इति न विस्मर्तव्यम्। इड्विधानात्परं सन्नन्तसमुदायस्य धातुसंज्ञां कृत्वा द्वित्वविधानं मुख्यं कार्यम्। यदि मूलधातुः परस्मैपदी भवति तर्हि सन्नन्तात् परमपि परस्मैपदमेव भवति। किञ्च यदि मूलधातुः आत्मनेपदी भवति तदा सन्नन्तात् परमपि आत्मनेपदमेव भवति।

**उदाहरणम् –** पिपठिषति।

**सूत्रार्थसमन्वयः –** तथा च पठ् इ स इति स्थिते सन्यङोः इत्यनेन प्रथमैकाचः पठ् इत्यस्य द्वित्वं भवति। यतः पठ्धातुः हलादिः अस्ति। ततः पठ् पठ् इ स इति जाते पूर्वोऽभ्यास इत्यनेन प्रथमस्य पठ् इत्यस्य अभ्याससंज्ञायां हलादिः शेषः इत्यनेन हलादिशेषे अर्थात् प्रथमठकारस्य लोपे पपठ् इस इति जायते। ततः सन्यतः इत्यनेन अभ्याससंज्ञकप्रथम–पकारात् परस्य अकारस्य इकारादेशे पिपठ् इ स इति जाते द्वितीय–इकारात् परस्य सकारस्य आदेशप्रत्यययोः इत्यनेन षत्वे पिपठ इ ष इति जाते वर्णसम्मेलने च पिपठिष इति जायते। ततः अस्य समुदायस्य सनाद्यन्ता धातव (३.१.३२) इत्यनेन धातुसंज्ञा भवति। ततः लट्लकारस्य प्रथमपुरुषैकवचनविवक्षायां तिपि शपि अनुबन्धलोपे पिपठिष अ ति इति स्थिते अतो गुणः इत्यनेन पररूपे पिपठिषति इति रूपं सिध्यति। एवमेव भवितुम् इच्छति इत्यर्थे बुभूषति इत्यादिरूपं साधयितुं शक्ष्यति।

अत्तुम् इच्छति इत्यर्थे अद्–धातोः सन्प्रत्यये लुङ्सनोर्घस्लृ इत्यनेन घस्लृ इत्यादेशे घस् स इति स्थिते सूत्रमिदं प्रस्तूयते–

## [२५.४] सः स्यार्धधातुके॥ (७.४.४९)

**सूत्रार्थः –** सस्य तः स्यात् सादावार्धधातुके।

**सूत्रव्याख्या –** विधिसूत्रमिदं पदत्रयात्मकमस्ति। सः (६/१), सि (७/१) आर्धधातुके (७/१) इति सूत्रगतपदच्छेदः। अच उपसर्गात्तः इत्यतः तः इत्यस्यानुवृत्तिर्भवति। तकारात् अकारः उच्चारणार्थः। सि इति आर्धधातुके इत्यस्य विशेषणमस्ति। अतः यस्मिन् विधिस्तदादावल्ग्रहणे इति



परिभाषया तदादिविधौ सकारादौ आर्धधातुके इत्यर्थो लभ्यते। एवञ्च सकारादौ आर्धधातुके परे सकारस्य स्थाने तकारादेशो भवति इति सूत्रार्थः फलति।

**उदाहरणम्** – जिघत्सति।

**सूत्रार्थसमन्वयः** – एवञ्च घस् स इत्यत्र आर्धधातुकः सकारो विद्यमानः। अतः प्रकृतसूत्रेण सकारस्य स्थाने तकारादेशे घत्स इति भवति। ततः प्रथम–एकाज्भागस्य सन्यङोः इत्यनेन द्वित्वे घत् घत् स इति जायते। ततः हलादिशेषे घ घत् स इति जाते प्रथमघकारस्य चर्त्वे झकारे अभ्यासे चर्च इत्यनेन जश्त्वे जकारे सन्यतः इत्यनेन जकारात् परस्य अकारस्य इत्वे जिघत्स इति जायते। ततः लटि तिपि शपि पररूपैकादेशे जिघत्सति इति रूपं सिध्यति।

कर्तुम् इच्छति इत्यर्थे डुकृञ् करणे इति धातोः धातोः कर्मणः समानकर्तृकादिच्छायां वा इति सूत्रेण सन्प्रत्यये कृ स इति स्थिते सनः आर्धधातुकत्वात् इडागमे प्राप्ते तं बाधते एकाच उपदेशेऽनुदात्तात् इति योगः। ततः दीर्घविधानार्थं शास्त्रमिदमारभ्यते –

## [२५.५] अज्झनगमां सनि॥ (६.४.१६)

**सूत्रार्थः** – अजन्तानां हन्तेरजादेशगमेश्च दीर्घो झलादौ सनि।

**सूत्रव्याख्या** – विधिसूत्रमिदं पदद्वयात्मकमस्ति। अज्झनगमाम् (६/३), सनि (७/१) इति सूत्रगतपदच्छेदः। अच् च हन् च गम् च तेषामितरेतरयोगद्वन्द्वे अज्झनगमः, तेषाम् अज्झनगमाम्। नोपधाया इत्यतः उपधाया इति पदस्य, अनुनासिकस्य क्विझलोः क्ङिति इत्यतः झलि इत्यस्य, ढ्रलोपे पूर्वस्य दीर्घोऽणः इत्यतः दीर्घ इति पदस्य च अनुवृत्तिर्भवति। अङ्गस्य इत्यधिक्रियते। अच् इति अङ्गस्य विशेषणं भवति इत्यतः तदन्तविधौ अजन्तस्य अङ्गस्य इत्यर्थो लभ्यते। झलि इति सनि इत्यस्य विशेषणम्। अतः तदादिविधौ झलादौ सनि इत्यर्थो भवति। इङश्च इत्यनेन विहितस्य अजादेशस्य गम्–धातोरेव स्वीकारः न तु गम्लृ गतौ इति धातोः। यत्र दीर्घादिः विधीयते तत्रैव अचश्च इति परिभाषया अचः स्थाने इत्यर्थो लभ्यते। अनुवृत्त्या लब्धस्य उपधायाः इत्यस्य हन्–गम्–धातुभ्यामेव सह अन्वयो भवति न तु अचा सह, यतो हि अजन्तधातुषु दीर्घयोग्यः उपधावर्णो नास्ति। एवञ्च सूत्रार्थस्तावत् – अजन्तधातोः, हन्धातोः किञ्च अजादेशगम्धातोः अचः स्थाने दीर्घ आदेशो भवति झलादौ सनि परे।

**उदाहरणम्** – चिकीर्षति।

**सूत्रार्थसमन्वयः** – एवञ्च कृ स इत्यत्र इण्निषेधे सन् झलादिरस्ति किञ्च अत्र कृ इति अजन्तम् अङ्गम् अपि अस्ति। अतः प्रकृतसूत्रेण दीर्घे कॄ स इति जायते।

एवञ्च कृ स इति स्थिते सनः आर्धधातुकत्वात् सार्वधातुकार्धधातुकयोः इत्यनेन गुणे प्राप्ते सूत्रमिदमारभ्यते–

## [२५.६] इको झल्॥ (१.२.९)

**सूत्रार्थः –** इगन्ताज्झलादिः सन् कित् स्यात्।

**सूत्रव्याख्या –** अतिदेशसूत्रमिदं पदद्वयात्मकम्। इकः (५/१), झल् (१/१) इति सूत्रगतपदच्छेदः। असंयोगाल्लिट्कित् इत्यतः कित् इति पदस्य , रुदविदमुषग्रहिस्वपिप्रच्छः संश्च इत्यतः सन् इति पदस्य चानुवृत्तिर्भवति। सन्प्रत्ययः धातोरेव विधीयते अतः सन् इत्यनेन धातुः आक्षिप्यते। आक्षिप्तस्य च धातोः इति विशेष्यस्य विशेषणम् इकः इति । ततः तदन्तविधौ इगन्तात् धातोः इत्यर्थो लभ्यते। किञ्च झल् इत्यस्य विशेषणं सन् इति। अतः तदादिविधौ झलादौ सनि इत्यर्थो लभ्यते। एवञ्च इगन्तधातोः परस्य झलादिसन्प्रत्ययस्य किद्वद्भावो भवति इति सूत्रार्थः। तथा च सूत्रेणानेन किद्वद्भावो विधीयते। किद्वद्भावस्य तु प्रयोजनं गुणनिषेधः।

**उदाहरणम् –** चिकीर्षति।

**सूत्रार्थसमन्वयः –** एवञ्च कृ स इति स्थिते प्रकृतसूत्रेण कित्त्वं भवति। यतो हि कृ इति इगन्तधातुः अस्ति। किञ्च स इति झलादिः सन् अस्ति। तथा च कित्वात् क्ङिति च इत्यनेन गुणनिषेधे ऋत इद्धातोः इत्यनेन ऋकारस्य इत्त्वे रपरत्वे हलि च इत्यनेन उपधादीर्घे आदेशप्रत्यययोः इत्यनेन सकारस्य षत्वे कीर्ष इति जायते। ततः सन्यङोः इत्यनेन सन्नन्तधातोः प्रथमैकाचः कीर् इत्यस्य द्वित्वे हलादिशेषे ह्रस्वे कुहोश्चुः इत्यनेन ककारस्य स्थाने चवर्गादिशे चकारे चिकीर्ष इति सन्नन्तरूपं भवति। ततः सनाद्यन्ता धातव (३.१.३२) इत्यनेन तस्य धातुसंज्ञायां लटि प्रथमपुरुषैकवचनविवक्षायां तिपि शपि पररूपे चिकीर्षति इति रूपं सिध्यति।

कर्त्रभिप्राये क्रियाफले तु आत्मनेपदप्रत्यये चिकीर्षते इति रूपं भवति।



## पाठगतप्रश्नाः-१

१. पिपठिषति इत्यत्र मूलधातुः कः सन्नन्तधातुश्च कः।

२. पिपठिषति इत्यत्र सन्नन्तस्य धातुसंज्ञा केन भवति।

३. सन्प्रत्ययः कस्मिन्नर्थे भवति।

४. सन्धातुः किं नित्यं भवति।

५. पिपठिषति इत्यस्य इत्यस्य कोऽर्थः।

६. सः स्यार्धधातुके इत्यस्य उदाहरणं किम्।

७. चिकीर्षति इति दीर्घः केन।

८. सनः किद्वद्भावस्य एकं प्रयोजनं लिखत।

९. के सनादयः इति लिखत।

१०. भवितुमिच्छति इत्यर्थे किं रूपं भवति।



भवितुम् इच्छति इत्यर्थे भूधातोः सन्प्रत्यये भू स इति स्थिते भूधातुः ऊदन्तत्वात् सेट् अस्ति इति कृत्वा सनः आर्धधातुकत्वात् आर्धधातुकस्येड्वलादेः इत्येन इडागमे प्राप्ते निषेधसूत्रमिदमारभ्यते –

## [२५.७] सनि ग्रहगुहोश्च॥ (७.२.१२)

**सूत्रार्थः –** ग्रहेर्गुहेरुगन्ताच्च सन इण्न स्यात्।

**सूत्रव्याख्या –** निषेधसूत्रमिदं पदत्रयात्मकम्। सनि (७/१), ग्रहगुहोः (६/२) च (अव्ययम्) इति सूत्रगतपदच्छेदः। ग्रहश्च गुह् च तयोरितरेतरयोगद्वन्द्वे ग्रहगुहौ, तयोर्ग्रहगुहोः, पञ्चम्यर्थे षष्ठी। नेड् वशि कृति इत्यतः न, इट् इत्यनयोरनुवृत्तिर्भवति। चकारेण श्र्युकः किति इत्यतः उकः इत्यस्यानुकर्षणं भवति। इडागमः सनः भवति न तु धातोः। अतः सनि इत्यस्य षष्ठ्यन्ततया विपरिणामः क्रियते। एवमेव ग्रहगुहोः इत्यस्य, उकः इत्यस्य च पञ्चम्यन्ततया विपरिणामः क्रियते। अङ्गस्य इत्यधिक्रियते तस्य उकः इति विशेषणम्। अतः तदन्तविधौ उगन्तात् अङ्गात् इत्यर्थो लभ्यते। एवञ्च ग्रह्–गुहधातुभ्यां तथा उगन्तादङ्गात् परस्य सनः इडागमो न भवतीति सूत्रार्थः। तथा च सूत्रेणानेन इडागमाभावो विधीयते।

**उदाहरणम् –** बुभूषति।

**सूत्रार्थसमन्वयः –** एवञ्च भूधातोः सनि भू स इति स्थिते भूधातुः उगन्तो वर्तते इति हेतोः प्रकृतसूत्रेण सनः इडागमो न भवति। ततः सन्यङोः इत्यनेन द्वित्वे हलादिशेषे ह्रस्वे च भु भू स इति जायते। ततः सार्वधातुकार्धधातुकयोः इत्यनेन आर्धधातुके गुणे प्राप्ते इको झल् इत्यनेन झलादिसनः कित्त्वात् क्ङिति च इत्यनेन गुणनिषेधो भवति। ततः अभ्यासे चर्च इत्यनेन अभ्यासस्य भकारस्य जश्त्वे आदेशप्रत्यययोः इत्यनेन सनः सकारस्य षत्वे बुभूष इति जायते। ततः तस्य सन्नन्तसमुदायस्य सनाद्यन्ता धातव (३.१.३२) इत्यनेन धातुसंज्ञायां लटि प्रथमपुरुषैकवचनविवक्षायां तिपि शपि पररूपे बुभूषति इति रूपं सिध्यति। बुभूषतः बुभूषन्ति इत्यादौ समानैव प्रक्रियास्ति इति ज्ञेयम्।

ग्रह्धातोः उदाहरणं जिघृक्षति। गुह्धातोः उदाहरणं जुघुक्षति।

इण् गतौ इति धातोः एतुमिच्छति इत्यर्थे सन्प्रत्यये इ स इति स्थिते सूत्रमिदमारभ्यते –

## [२५.८] सनि च॥ (२.४.४७)

**सूत्रार्थः –** इणः गमिः स्यात् सनि, न तु बोधने।

**सूत्रव्याख्या –** विधिसूत्रमिदं द्विपदात्मकम्। सनि (७/१) च (अव्ययम्) इति सूत्रगतपदच्छेदः। इणो गा लुङि इत्यतः इणः इति पदस्य, णौ गमिरबोधने इत्यतः गमिः इति पदस्य, अबोधने इति पदस्य चानुवृत्तिर्भवति। तथा च इण्धातोः स्थाने गमि इत्ययमादेशो भवति सन्प्रत्यये परतः। किन्तु बोधनार्थे स आदेशो न भवति। गमि इत्यत्र इकार इत्संज्ञकः, अतः गम्मात्रमवशिष्यते। तथा च सूत्रेणानेन गमि इत्यादेशो विधीयते।

**उदाहरणम् –** जिगमिषति।



**सूत्रार्थसमन्वयः –** एवञ्च इण्धातोः सन्प्रत्यये इ स इति स्थिते प्रकृतसूत्रेण गमि इत्यादेशो भवति। यतो हि अत्र इण्धातुरस्ति किञ्च बोधनार्थोऽपि नास्ति। ततः अनुबन्धलोपे गम् स इति स्थिते गमेरिट् परस्मैपदेषु इत्यनेन सकाराद्यार्धातुकप्रत्ययस्य सनः इडागमे धातोः द्वित्वे हलादिशेषे अभ्यासजश्त्वे जगम् इस इति जायते। ततः सन्यतः इत्यनेन अभ्यास–अकारस्य इत्त्वे सनः सकारस्य षत्वे जिगमिष इति जाते ततः लटि प्रथमपुरुषैकवचनविवक्षायां तिपि शपि पररूपे जिगमिषति इति रूपं सिध्यति। एवमेव जिगमिषतः, जिगमिषन्ति इत्यादौ समाना प्रक्रिया।

प्रति–उपसर्गपूर्वकात् इण्धातोः सनि प्रतीषिषति इति यद्रूपं भवति तत्र इण्धातोः गमि इत्यादेशो न भवति। यतो हि अत्र बोधनार्थः अस्ति।

लेखितुमिच्छति इत्यर्थे लिख्धातोः सन्प्रत्यये सनः आर्धधातुकत्वात् आर्धधातुकस्येड्वलादेः इत्यनेन इडागमे लिख् इस इति स्थिते सन्यङोः इत्यनेन धातोर्द्वित्वे लिख् लिख् इस इति जायते। ततः हलादिशेषे अभ्यासह्रस्वे लि लिख् इस इति जाते लघूपधगुणे प्राप्ते तं बाधितुं सूत्रमिदमारभ्यते –

## [२५.९] रलो व्युपधाद्धलादेः संश्च॥ (१.२.२६)

**सूत्रार्थः –** उश्च इश्च वी। ते उपधे यस्य तस्माद्धलादे रलन्तात्परौ क्त्वासनौ सेटौ वा कितौ स्तः।

**सूत्रव्याख्या –** अतिदेशसूत्रेऽस्मिन् पञ्च पदानि सन्ति। रलः (५/१) व्युपधात् (५/१) हलादेः (५/१) सन् (१/१) च (अव्ययम्) इति सूत्रगतपदच्छेदः। उश्च इश्च वी, ते उपधे यस्य स व्युपधः तस्मात् व्युपधात्, द्वन्द्वगर्भो बहुव्रीहिः। हल् आदिर्यस्य स हलादिः तस्माद् हलादेः, बहुव्रीहिः। नोपधात्फान्ताद्वा इत्यतः वा इत्यस्य , न क्त्वा सेट् इत्यतः सेट् इत्यस्य, असंयोगाल्लिट् कित् इत्यतः कित् इत्यस्य, पूङः क्त्वा च इत्यतः क्त्वा इत्यस्य चानुवृत्तिर्भवति। एवञ्च धातोः उपधायां यदि इकारः अथवा उकारो भवति, किञ्च धातोः अन्ते रल्प्रत्याहारस्थः कोऽपि वर्णः स्यात्, अपि च धातुः हलादिः स्यात्, किञ्च क्त्वः सनो वा इडागमो विहितो भवति चेत् तयोः क्त्वासनोः विकल्पेन कित्त्वं विधीयते इति सूत्रस्य सम्पूर्णार्थः। तथा च सूत्रेणानेन वैकल्पिकं कित्त्वं विधीयते।

**उदाहरणम् –**

इकारोपधस्य उदाहरणम् – लिलिखिषति, लिलेखिषति।

उकारोपधस्योदाहरणम् - रुरुचिषते , रुरोचिषते।

**सूत्रार्थसमन्वयः –** लिख अक्षरविन्यासे इति धातुः इकारोपधः, हलादिः, रलन्तः च अस्ति। अतः लिख् धातोः सनि द्वित्वादिकार्ये लि लिख् इस इति स्थिते प्रकृतसूत्रेण इस इत्यस्य विकल्पेन किद्वद्भावे लघूपधगुणनिषेधे लिलिखिस इति जायते। ततः आदेशप्रत्यययोः इत्यनेन सकारस्य षत्वे लि लिखिष इति भवति। ततः तस्य धातुसंज्ञायां लटि प्रथमपुरुषैकवचनविवक्षायां तिपि शपि लिलिखिषति इति रूपं भवति। कित्त्वाभावपक्षे तु लघूपधगुणो भवति। तदा लिलेखिषति इति रूपमपि भवति।



अधुना उकारोपधधातुविषये उच्यते। रुच दीप्तावभिप्रीतौ च इति धातुः आत्मनेपदी, उकारोपधः, हलादिः, रलन्तः च अस्ति। रोचितुमिच्छति इत्यर्थे रुच्धातोः सनि इडागमे धातोः द्वित्वे हलादिशेषे रुरुच् इस इति जाते प्रकृतसूत्रेण विकल्पेन किद्वद्भावे लघूपधगुणनिषेधे आदेशप्रत्यययोः इत्यनेन सकारस्य षत्वे रुरुचिष इति जायते। ततः धातुसंज्ञायां लटि प्रथमपुरुषैकवचनविवक्षायां तप्रत्यये शपि पररूपे रुरुचिषते इति रूपं सिध्यति। कित्त्वाभावपक्षे तु लघूपधगुणो भवत्येव । तदा रुरोचिषते इति रूपमपि भवति।

भेत्तुमिच्छति इत्यर्थे भिदिर् विदारणे इति धातोः सन्प्रत्यये भिद् स इति जायते। ततः अयं धातुः अनिट् अस्ति इति हेतोः इडागमो न भवति। ततः  भिदः द्वित्वे हलादिशेषे अभ्यासजश्त्वादिकार्ये कृते सति बिभिद् स इति जायते। ततः सनः आर्धधातुकत्वात् लघूपधगुणे प्राप्ते अतिदेशसूत्रमिदमारभ्यते –

## [२५.१०] हलन्ताच्च॥ (१.२.१०)

**सूत्रार्थः –** इक्समीपाद्धलः परो झलादिः सन् कित् स्यात्।

**सूत्रव्याख्या –** अतिदेशसूत्रमिदं पदद्वयात्मकम्। हलन्तात् (५/१) च इति सूत्रगतपदच्छेदः। इको झल् इति समग्रं सूत्रमनुवर्तते। किञ्च असंयोगाल्लिट् कित् इत्यतः कित् इत्यस्यानुवृत्तिर्भवति। अपि च रुदविदमुषग्रहिस्वपिप्रच्छः संश्च इत्यतः सन् इत्यस्यापि अनुवृत्तिर्भवति। तेन इकः समीपे विद्यमानात् हलः परः झलादिः सन् कित् भवति इति सूत्रार्थः। सूत्रे अन्तपदस्य समीपे इत्यर्थः। तथा च सूत्रेणानेन कित्त्वं विधीयते।

**उदाहरणम् –** बिभित्सति , बिभित्सते।

**सूत्रार्थसमन्वयः –** एवञ्च भिद् धातोः सन्प्रत्यये द्वित्वादिकार्ये कृते सति बिभिद् स इति स्थिते प्रकृतसूत्रेण झलादिसनः किद्वद्भावो भवति। यतो हि अत्र इक् अस्ति इकारः, तत्समीपवर्ती हल् भवति दकारः। ततः क्ङिति च इत्यनेन लघूपधगुणनिषेधो भवति, ततः खरि च इत्यनेन चर्त्वे बिभित्स इति जायते। ततः धातुसंज्ञायां लटि प्रथमपुरुषैकवचनविवक्षायां तिपि शपि पररूपैकादेशे बिभित्सति इति रूपं सिध्यति।

मूलधातुः उभयपदी अस्ति इति हेतोः सन्नन्तधातुरपि उभयपदी भवति। अतः पक्षे बिभित्सते इत्यपि भवति।

तुदादिगणीय–कृ–गृ–धातुभ्यां इट् सनि वा  इत्यनेन विकल्पेन इट् प्राप्तः किञ्च दृङ्–धृङ्–प्रच्छ–धातुभ्यः एकाच उपदेशेऽनुदात्तात् इत्यनेन आर्धधातुकस्य इण्निषेधः प्राप्तः। तदेतत् सर्वं बाधित्वा इडागमविधानार्थं सूत्रमिदमारभ्यते–



## [२५.११] किरश्च पञ्चभ्यः॥ (७.२.७५)

**सूत्रार्थः –** कृ–गृ–दृङ्–धृङ्–प्रच्छधातुभ्यः विहितस्य सनः इडागमो भवति।

**सूत्रव्याख्या –** विधिसूत्रमिदं पदत्रयात्मकमस्ति। किरः (५/१) च पञ्चभ्यः (५/३) इति सूत्रगतपदच्छेदः। इडत्त्यर्तिव्ययतीनाम् इत्यतः इट् इत्यस्य, स्मिपूङ्रञ्ज्वशां सनि इत्यतः सनि इत्यस्य चानुवृत्तिर्भवति। एवञ्च कृ–गृ–दृङ्–धृङ्–प्रच्छधातुभ्यः विहितस्य सनः इडागमो भवति।

**उदाहरणम् –** जिगरिषति, जिगलिषति।

**सूत्रार्थसमन्वयः –** तथा च गरितुं गलितुं वा इच्छति इत्यर्थे गृ निगरणे धातोः सनि सनः आर्धधातुकत्वात् आर्धधातकस्येड्वलादेः इत्यनेन इडागमे प्राप्ते सनि ग्रहगुहोश्च इति तन्निषेधः प्राप्तः। पुनः तं बाधित्वा इट् सनि वा इत्यनेन विकल्पेन इटि प्राप्ते तमपि बाधित्वा किरश्च पञ्चभ्यः इत्यनेन नित्यम् इडागमो भवति। यतो हि अत्र कृधातुः अस्ति। किञ्च तस्माद्विहितः सन् अपि अस्ति। ततः गृ इत्यस्य द्वित्वे गृ गृ इस इति जाते उरत् इत्यनेन अभ्यासस्य ऋकारस्य अकारादेशे रपरत्वे ज गृ इस इति जाते वृतो वा इत्यनेन विकल्पेन इटः इकारस्य विकल्पेन दीर्घे प्राप्ते चास्येटो दीर्घत्वं नेच्छन्ति इति वचनात् तस्य बाधो भवति। ततः सार्वधातुकार्धधातुकयोः इत्यनेन ऋकारस्य गुणे जगर् इस इति जाते अभ्यासस्य अकारस्य इत्त्वे आदेशप्रत्यययोः इत्यनेन सकारस्य षत्वे जिगरिष इति जायते। ततः लटि प्रथमपुरुषैकवचनविवक्षायां तिपि शपि पररूपैकादेशे जिगरिषति इति रूपं सिध्यति । इटि परे सर्वत्र रेफस्य लत्वं विधीयते अचि विभाषा इति योगेन। अतः जिगलिषति इति रूपमपि सिध्यति।

एवमेव करितुम् (करीतुम्) इच्छति इत्यर्थे कृ-विक्षेपे इति धातोः सनादिकार्ये कृते सति चिकरिषति इति रूपमपि सिध्यति।

दृङ्धातोरुदाहरणम् - दिदरिषते - दर्तुमिच्छति इत्यर्थे दृङ् आदरे इति धातोः सनि इटि प्राप्ते एकाच उपदेशेऽनुदात्तात् इत्यनेन तन्निषेधः प्राप्तः। ततः किरश्च पञ्चभ्यः इत्यनेन नित्यं इडागमो भवति। ततः धातोः द्वित्वादिकार्ये सति दिदरिषते इति रूपं सिध्यति।

एवमेव धर्तुमिच्छति इत्यर्थे धृङ् अनवस्थाने इति धातोः सनादिकार्ये कृते सति दिधरिषते इति रूपं सिध्यति।

प्रच्छ ज्ञीप्सायामिति धातोः प्रष्टुमिच्छति इत्यर्थे सनि धातोः अनिट्त्वात् इटि अप्राप्ते किरश्च पञ्चभ्यः इति विशेषसूत्रेण नित्यम् इडागमे द्वित्वादिकार्ये च कृते सति पिपृच्छति इति रूपं सिध्यति।

अध्येतुम् इच्छति इत्यर्थे नित्यमधिपूर्वकात् इङ् अध्ययने इति अदादिगणीयधातोः धातोः कर्मणः समानकर्तृकादिच्छायां वा इति सनि इ स इति स्थिते अग्रिमसूत्रमिदमारभ्यते -

## [२५.१२] इङश्च॥ (२.४.४८)

**सूत्रार्थः –** इङो गमिः स्यात् सनि।

**सूत्रव्याख्या –** विधिसूत्रमिदं पदद्वयात्मकमस्ति। इङः (५.१) च इति सूत्रगतपदच्छेदः। णौ गमिरबोधने इत्यतः गमिः इत्यस्य , सनि च इत्यतः सनि इत्यस्य चानुवृत्तिर्भवति। तथा च सनि परे सति



इङ्धातोः स्थाने गमि इत्यादेशो भवति इति सूत्रार्थः। गमि इत्यत्र इकारस्य इत्संज्ञकत्वात् गम्मात्रमवशिष्यते।

**उदाहरणम्** – अधिजिगांसते।

**सूत्रार्थसमन्वयः** – एवञ्च नित्यमधिपूर्वकात् इङ् धातोः सनि इङश्च इत्यनेन गमि इत्यादेशे अनुबन्धलोपे अधि गम् स इति जायते। ततः अज्झनगमां सनि इत्यनेन उपधादीर्घे गाम् स इति जायते। ततः मूलधातुः ङित् अस्ति इति हेतोः अनुदात्तङित आत्मनेपदम् इत्यनेन स आत्मनेपदी भवति। फलतः पूर्ववत्सनः इत्यनेन सन्नन्तरूपमपि आत्मनेपदं भवति। ततः धातोः द्वित्वे हलादिशेषे अभ्यासह्रस्वे सन्यतः इत्यनेन अभ्यास–अकारस्य इत्वे मकारस्य अनुस्वारे अधि जिगांस इति स्थिते तप्रत्यये कृते सति अधिजिगांसते इति रूपं सिध्यति।



## पाठगतप्रश्नाः-२

११. इङश्च इति सूत्रस्य कोऽर्थः।

१२. सनि च इत्यस्य कोऽर्थः।

१३. प्रष्टुमिच्छति इत्यर्थे प्रच्छधातोः सनि किं रूपं भवति।

१४. किरश्च पञ्चभ्यः इत्यनेन किं भवति।

१५. हलन्ताच्च इत्यनेन किं विधीयते।

१६. ग्रहधातोः सनि किम् उदाहरणम्।

१७. गुहधातोः सनि किम् उदाहरणम्।

१८. रलो व्युपधाद्धलादेः संश्च इत्येनन विधीयमानं कित्त्वं किं नित्यम् उत अनित्यम्।

---

तनितुम् इच्छति इत्यर्थे तनु विस्तारे इति उभयपदिनः धातोः सन्प्रत्यये तन् स इति स्थिते तनिपतिदरिद्रातिभ्यः सनो वा इड्वाच्यः इति वार्तिकेन विकल्पेन इट्पक्षे तन् इ स इति जाते धातोः द्वित्वे हलादिशेषे अभ्यासह्रस्वे अभ्यासाकारस्य इत्वे तितांस इति सन्नन्तरूपं भवति। ततः तस्य सनाद्यन्ता धातव (३.१.३२) इत्यनेन धातुसंज्ञायां लटि तिपि शपि पररूपैकादेशे तितनिषति इति रूपं जायते, तप्रत्यये तु तितनिषते इति रूपम्। यदा तु इडभावः तदा तन् स इति स्थिते सूत्रमिदमारभ्यते -

## [२५.१३] तनोतेर्विभाषा॥ (६.४.१७)

**सूत्रार्थः** – तनोतेरुपधाया दीर्घो वा स्यात् झलादौ सनि।

**सूत्रव्याख्या** – विधिसूत्रमिदं पदद्वयात्मकमस्ति। तनोतेः (५/१) विभाषा (अव्ययम्) इति सूत्रगतपदच्छेदः। नोपधायाः इत्यतः उपधायाः इत्यस्य अनुवृत्तिर्भवति, ढ्रलोपे पूर्वस्य दीर्घोऽणः इत्यतः

दीर्घः इत्यस्य, अज्झनगमां सनि इत्यतः सनि इत्यस्य चानुवृत्तिर्भवति। तथा च तन्धातोः उपधाया विकल्पेन दीर्घो भवति झलादौ सनि इति सूत्रार्थः।

**उदाहरणम्** – तितांसति, तितंसति।

**सूत्रार्थसमन्वयः** - एवञ्च तन्-धातोः सनि तन् स इति जाते तनोतेर्विभाषा इत्यनेन उपधाभूत-अकारस्य दीर्घे तान् स इति जायते। ततः धातोः द्वित्वे हलादिशेषे अभ्यासह्रस्वे अभ्यास-अकारस्य इत्त्वे तितान् स इति जाते नकारस्य नश्चापदान्तस्य झलि इत्यनेन नकारस्य अनुस्वारे तितांस इति जायते। ततः लटि तिपि शपि पररूपैकादेशे तितांसति इति रूपं भवति, तप्रत्यये तु तितांसते इति रूपं सिध्यति। दीर्घाभावपक्षे तु तन् स इति स्थिते द्वित्वादिकार्ये तितंस इति जायते। ततः लटि तिपि शपि पररूपैकादेशे तितंसति इति रूपं सिध्यति, तप्रत्यये तु तितंसते इति रूपम् इति साकल्येन षट् रूपाणि भवन्ति।

देवितुमिच्छति इत्यर्थे दिवु क्रीडाविजिगीषाव्यवहारस्तुतिमोदमदस्वप्नकान्तिगतिषु इति धातोः सनि दिव् स इति स्थिते सूत्रमिदमारभ्यते –

## [२५.१४] सनीवन्तर्धभ्रस्जदम्भुश्रिस्वृयूर्णुभरज्ञपिसनाम्॥ (७.२.४९)

**सूत्रार्थः** – इवन्तेभ्य ऋधादिभ्यश्च सन इड् वा स्यात्।

**सूत्रव्याख्या** – विधिसूत्रमिदं पदद्वयात्मकमस्ति। सनि (७/१) इवन्तर्धभ्रस्जदम्भुश्रिस्वृयूर्णुभरज्ञपिसनाम् (६/३) इति सूत्रगतपदच्छेदः। इव् अन्ते येषां ते इवन्ताः, इवन्ताश्च ऋधश्च भ्रस्जश्च दम्भुश्च श्रिश्च स्वृश्च युश्च ऊर्णुश्च भरश्च ज्ञपिश्च सन् च तेषामितरेतरयोगद्वन्द्वे इवन्तर्धभ्रस्जदम्भुश्रिस्वृयूर्णुभरज्ञपिसनः तेषां इवन्तर्धभ्रस्जदम्भुश्रिस्वृयूर्णुभरज्ञपिसनाम्, बहुव्रीहिगर्भो द्वन्द्वः। सूत्रेऽस्मिन् स्वरतिसूतिसूयतिधूञूदितो वा इत्यतः वा इत्यस्य, इण्निष्ठायाम् इत्यतः इट् इत्यस्य चानुवृत्तिर्भवति। यस्य धातोः अन्ते इव् अस्ति स धातुः इवन्त इत्युच्यते यथा दिव् सिव् इत्यादि। तथा च इवन्तधातुभ्यः तथा ऋध्–भ्रस्ज्–दम्भ्–श्रि–स्वृ–यु–ऊर्णु–भर–ज्ञप्–सन्–धातुभ्यः परस्य सनः विकल्पेन इडागमो भवति इति सूत्रार्थः फलति। सूत्रेणानेन वैकल्पिकः इडागमो विधीयते। प्रकृतसूत्रेण यदा इट् न भवति। तदा हलन्ताच्च इत्यनेन किद्वद्भावात् गुणनिषेधो भवति इति विज्ञेयम्।

**उदाहरणम्** – अधुना क्रमश उदाहरणानि आलोच्यन्ते–

इवन्तः – दिव्धातोः सनि प्रकृतसूत्रेण वैकल्पिके इडागमे दिव् इस इति जाते दिव्धातोः द्वित्वे हलादिशेषे दिदिव् इस इति जायते। ततः लघूपधगुणे सनः सकारस्य षत्वे ततः लटि तिपि शपि पररूपैकादेशे दिदेविषति इति रूपं सिध्यति। इडभावपक्षे तु हलन्ताच्च इत्यनेन सनः किद्वद्भावात् गुणनिषेधे च्छ्वोः शूडनुनासिके च इत्यनेन धातोः वकारस्य ऊठादेशे दि ऊ स इति जाते इको यणचि इत्यनेन यणि अज्झनगमां सनि इत्यनेन दीर्घे द्यू स इति जायते। ततः द्यू इत्यस्य द्वित्वे हलादिशेषे अभ्यासस्य ऊकारस्य ह्रस्वे सकारस्य षत्वे तिबादिकार्ये कृते सति दुद्यूषति इति रूपं सिध्यति।



ऋध्धातोः उदाहरणम् - अर्धितुमिच्छति ईर्त्सति, अर्दिधिषति।

भ्रस्जधातोः उदाहरणम् - बिभ्रज्जिषति, बिभर्जिषति, बिभ्रक्षति, बिभर्क्षति।

दम्भधातोः उदाहरणम् - धिप्सति, धीप्सति, दिदम्भिषति।

श्रिधातोः उदाहरणम् - शिश्रीषति, शिश्रयिषति।

स्वृधातोः उदाहरणम् - सुस्वूर्षति, सिस्वरिषति।

युधातोः उदाहरणम् - युयूषति, यियविषति।

ऊर्णुधातोः उदाहरणम् - ऊर्णुनूषति, ऊर्णुनुविषति, ऊर्णुनविषति।

भृधातोः उदाहरणम् - बुभूर्षति, बिभरिषति।

ज्ञप्धातोः उदाहरणम् - ज्ञीप्सति, जिज्ञपयिषति।

सन्धातोः उदाहरणम् - सिषासति, सिसनिषति।

हलन्ताच्च इत्यनेन किद्वद्भावे गुणनिषेधे प्राप्ते तस्यापि निषेधार्थं सूत्रमिदमारभ्यते –

## [२५.१५] मुचोऽकर्मकस्य गुणो वा॥ (७.४.५७)

**सूत्रार्थः** – सादौ सनि अकर्मकस्य मुच्धातोः विकल्पेन गुणो भवति।

**सूत्रव्याख्या** – विधिसूत्रमिदं पदचतुष्टयात्मकमस्ति। मुचः (६/१) अकर्मकस्य (६/१) गुणः (१/१) वा इति सूत्रगतपदच्छेदः। सः स्यार्धधातुके इत्यतः सि इत्यस्य, सनि मीमाघुरभलभशकपतपदामच इस् इत्यतः सनि इत्यस्य, सूत्रे गुणशब्दमुच्चार्य गुणो विधीयते। अतः इको गुणवृद्धी इति परिभाषाबलात् इकः इत्यस्योपस्थितिर्भवति। सकारादिः सन् इत्यस्य तात्पर्यं भवति इट्–रहितः सन्प्रत्ययः। एवञ्च अकर्मकस्य मुच्धातोः इकः विकल्पेन गुणो भवति सकारादौ सन्प्रत्यये परे इति सूत्रार्थः।

**उदाहरणम्** – मोक्षते, मुमुक्षते वा वत्सः स्वयमेव।

**सूत्रार्थसमन्वयः** – मुच्लृ मोक्षणे इति धातुः सकर्मकः अस्ति किन्तु कर्मकर्तृत्वात् अथवा कर्माविवक्षायाम् अयं धातुः अकर्मको भवति। एवञ्च मोक्तुमिच्छति स्वयमेव इत्यर्थे मुच्धातोः प्रकृतसूत्रेण विकल्पेन उकारस्य गुणे मोच् स इति भवति। यतो हि अत्र अकर्मकः मुच्धातुरस्ति अपि च सकारादिसन्प्रत्ययोऽस्ति। ततः धातोः द्वित्वे हलादिशेषे अभ्यासह्रस्वे अत्र लोपोऽभ्यासस्य इत्यनेन सम्पूर्णाभ्यासलोपे मोच् स इति जाते चोः कुः इत्यनेन कुत्वे सकारस्य षत्वे मोक्षः इति भवति । तस्य च सनाद्यन्ता धातव (३.१.३२) इत्यनेन धातुसंज्ञा भवति। कर्मकर्तृत्वात् धातुः स्वतः आत्मनेपदी अस्ति । एवञ्च पूर्वत्सनः इति नियमेन लटि तप्रत्यये शपि पररूपैकादेशे मोक्षते इति रूपं भवति। गुणाभावपक्षे मुमुक्षते इति रूपम् इत्येवं रूपद्वयं भवति।

हलन्ताच्च इत्यनेन रुद्–विद्–मुष्धातुभ्यः सनः कित्त्वे सिद्धे, रलो व्युपधाद्धलादेः संश्च इत्यनेन विकल्पेन कित्त्वे सिद्धे उभयोः बाधनार्थम् अर्थात् प्रतिप्रसवार्थमिदं सूत्रमारभ्यते।



किञ्च ग्रह्धातोः न क्त्वा सेट् इत्यनेन प्राप्तनिषेधं बाधितुमग्रिमसूत्रं प्रवर्तते।

अपि च यद्यपि स्वप्–प्रच्छधातुभ्यां परस्य क्त्वः कित्त्वमस्ति तथापि सनः कित्त्वं नास्ति इति हेतोः अप्राप्तकित्त्वविधानार्थमिदं शास्त्रमारभ्यते–

## [२५.१६] रुदविदमुषग्रहिस्वपिप्रच्छः संश्च॥ (१.२.८)।

**सूत्रार्थः –** रुद्–विद्–मुष्–ग्रह्–स्वप्–प्रच्छधातुभ्यः परौ सन् क्त्वा च कितौ स्तः।

**सूत्रव्याख्या –** अतिदेशसूत्रमिदं पदत्रयात्मकमस्ति। रुदविदमुषग्रहिस्वपिप्रच्छः (५/१) सन् (१/१) च इति सूत्रगतपदच्छेदः। रुषश्च विदश्च मुषश्च ग्रहिश्च स्वपिश्च प्रच्छ् च तेषां समाहारद्वन्द्वे रुदविदमुषग्रहिस्वपिप्रच्छ्, तस्मात् रुदविदमुषग्रहिस्वपिप्रच्छः। चकारः समुच्चयार्थः। पूर्वसूत्रात् अर्थात् मृडमृदगुधकुषक्लिशवदवसः क्त्वा इत्यतः क्त्वा इत्यस्य समुच्चयः। असंयोगाल्लिट् कित् इत्यतः कित् इत्यस्यानुवृत्तिर्भवति। तथा च पूर्वोक्तः सूत्रार्थः सिध्यति। एवञ्च सूत्रेणानेन कित्त्वं विधीयते।

**उदाहरणम् –** रुरुदिषति।

**सूत्रार्थसमन्वयः –** रोदितुम् इच्छति इत्यर्थे रुदिर् अश्रुविमोचने इति धातोः सनि इडागमे रुदः द्वित्वे हलादिशेषे रु रुद् इस इति जायते। ततः सन्यतः इत्यनेन अभ्यासस्य अकारस्य इत्त्वे रु रुद् इस इति जाते सनः आर्धधातुकत्वात् तदागमस्यापि यदागमास्तद्गुणीभूतास्तद्ग्रहणेन गृह्यन्ते इति परिभाषया आर्धधातुकत्वमस्ति इति हेतोः पुगन्तलघूपधस्य च इत्यनेन गुणे प्राप्ते प्रकृतसूत्रेण सनः किद्वद्भावे क्ङिति च इति गुणनिषेधो भवति। ततः आदेशप्रत्यययोः इत्यनेन सकारस्य षत्वे रुरुदिष इति जायते तस्य च रुरुदिष इति समुदायस्य सनाद्यन्ता धातव (३.१.३२) इत्यनेन धातुसंज्ञायां लटि प्रथमपुरुषैकवचनविवक्षायां तिपि शपि पररूपैकादेशे रुरुदिषति इति रूपं सिध्यति।

एवमेव वेदितुं वेत्तुम् वा इच्छति इत्यर्थे विद्धातोः सनि विविदिषति, मोषितुमिच्छति इत्यर्थे मुष स्तेये इति धातोः सनि मुमुषिषति इत्युभयत्रापि बोध्यम्।

ग्रहीतुमिच्छति इत्यर्थे ग्रह उपादाने इति धातोः सनि जिघृक्षति इति रूपं भवति। अत्र सनः किद्वद्भावस्य फलं ग्रहिज्यावयिव्यधिवष्टिविचतिवृश्चतिपृच्छतिभृज्जतीनां ङिति च इति रेफस्य सम्प्रसारणम्।

स्वप्तुमिच्छति इत्यर्थे ञि ष्वप शये धातोः सनि सुषुप्सति इति रूपं भवति। अत्र सनः कित्त्वस्य फलं तावत् वचिस्वपियजादीनां किति इत्यनेन वकारस्य सम्प्रसारणं भवति।

अधुना भवतां बोधसौकर्याय लटि कानिचित् सन्नन्तरूपाणि अधः तालिकया प्रदर्श्यन्ते-

| धातुः | सन्नन्तार्थः | सामान्यरूपाणि | लटि सन्नन्तरूपाणि |
|---|---|---|---|
| **अर्च्** | पूजने की इच्छा करना | अर्चति | अर्चिचिषति |
| **आप्** | पाने की इच्छा करना | आप्नोति | ईप्सति |
| **अधि-इङ्** | पढने की इच्छा करना | अधीते | अधिजिगांसते |
| **कथ्** | कहने की इच्छा करना | कथयति | चिकथयिषति-ते |



| | | | |
|---|---|---|---|
| **कृ** | करने की इच्छा करना | करोति | चिकीर्षति |
| **खाद्** | खाने की इच्छा करना | खादति | चिखादिषति |
| **गम्** | जाने की इच्छा करना | गच्छति | जिगमिषति |
| **गृ** | निगलने की इच्छा करना | गिरति, गिलति | जिगरिषति, जिगलिषति |
| **ग्रह्** | ग्रहण करने की इच्छा करना | गृह्णाति | जिघृक्षति-ते |
| **घ्रा** | सूँघने की इच्छा करना | जिघ्रति | जिघ्रासति |
| **चल्** | चलने की इच्छा करना | चलति | चिचलिषति |
| **चि** | चयन करने की इच्छा करना | चिनोति | चिचीषति |
| **छिद्** | काटने की इच्छा करना | छिनत्ति | चिच्छित्सति-ते |
| **चुर्** | चुराने की इच्छा करना | चोरयति | चुचोरयिषति-ते |
| **जि** | जीतने की इच्छा करना | जयति | जिगीषते |
| **ज्ञा** | जानने की इच्छा करना | जानाति | जिज्ञासते |
| **तृ** | तरने की इच्छा करना | तरति | तितीर्षति |
| **दृश्** | देखने की इच्छा करना | पश्यति | दिदृक्षते |
| **पच्** | पकाने की इच्छा करना | पचति | पिपक्षति-ते |
| **पा** | पीने की इच्छा करना | पिबति | पिपासति |
| **बुध्** | जानने की इच्छा करना | बुध्यते | बुभुत्सते |
| **भुज्** | खाने की इच्छा करना | भुङ्क्ते | बुभुक्षते |
| **भू** | होने की इच्छा करना | भवति | बूभूषति |
| **मुच्** | छुटने की इच्छा करना | मुञ्चते | मुमुक्षते |
| **मृ** | मरनेकी इच्छा करना | म्रियते | मुमूर्षते |
| **लभ्** | पाने की इच्छा करना | लभते | लिप्सते |



## पाठगतप्रश्नाः-३

१९. तन्धातोः सनि कति रूपाणि कानि च तानि।

२०. स्वप्तुमिच्छति इत्यर्थे स्वप्धातोः सनि किं रूपम्

२१. रुदविदमुषग्रहिस्वपिप्रच्छः संश्च इत्यनेन किं विधीयते।

२२. रुरुदिषति इत्यस्य कोऽर्थः।

२३. सनीवन्तादिसूत्रं पूरयत।

२४. एतुमिच्छति इत्यर्थे इधातोः सनि किं रूपम्।

२५. सनि च इति कीदृशं सूत्रम्। अतिदेशसूत्रं विधिसूत्रं वा।



## पाठसारः

भ्वादितः चुरादिं यावत् ये दशगणीया धातवो वर्तन्ते तेभ्यो धातुभ्यः इच्छार्थे सन्प्रत्ययो भवति। तदा तस्य सन्नन्तशब्दस्य सनाद्यन्ता धातव (३.१.३२) इत्यनेन धातुसंज्ञा भवति। यथा पठ् व्यक्तायां वाचि इति मूलधातोः सनि पिपठिषति इति रूपं भवति। अत्र पिपठिष इत्यस्य धातुसंज्ञा। मूलस्य पठ् इत्यस्य तु भूवादयो धातव (१.३.१) इत्यनेन धातुसंज्ञा भवति इति विशेषः ज्ञेयः। सनि परे अथवा सनः नानाविधानि कार्याणि सन्ति। यथा इगन्तधातोः परस्य झलादिसन्प्रत्ययस्य किद्वद्भावो भवति तेन चिकीर्षति इत्यादौ गुणनिषेधः। क्वचित् सनः इडागमो न भवति तेन जुघुक्षति , जिघृक्षति इत्यादौ न गुणः। अकर्मकस्य मुच्धातोः इकः विकल्पेन गुणो भवति सकारादौ सन्प्रत्यये परे तेन मोक्षते, मुमुक्षते वा वत्सः स्वयमेव इति सिध्यति। तन्धातोः उपधाया दीर्घो वा स्यात् झलादौ सनि तेन तितांसति, तितंसति, तितनिषति इति रूपत्रयं सिध्यति। गत्यर्थे इण्धातोः गमिरादेशः स्यात् सनि स्यात् न तु बोधने इत्युच्यते तेन जिगमिषति इति रूपं सिध्यति। किञ्च इङ्धातोः स्थाने गमि इत्यादेशे अधिजिगांसते इति रूपं सिध्यति। तत्र भवतां प्रक्रियासौकर्याय पठितुम् इच्छति इति विग्रहे पठ्धातोः सनि पिपठिषति इति रूपनिष्पत्तिः कथं भवति इत्येतत् सर्वमत्र स्पष्टमालोचितमस्ति।



## पाठान्तप्रश्नाः

१. सनाद्यन्ता धातव इति सूत्रं व्याख्यात।

२. पिपठिषति इति सन्नन्तधातुरूपसिद्धिः कथं भवति इति व्याख्यात।



३. धातोः कर्मणः समानकर्तृकादिच्छायां वा इति सूत्रं सोदाहरणं व्याख्यात।

४. अधिजिगांसते इति सन्नन्तधातुरूपं सोदाहरणं व्याख्यात।

५. सनि ग्रहगुहोश्च इति सूत्रं सोदाहरणं व्याख्यात।

६. रलो व्युपधाद्धलादेः संश्च इति सूत्रं व्याख्यात।

७. किरश्च पञ्चभ्यः इति सूत्रस्थानि उदाहरणानि व्याख्येयानि।

८. सनीवन्तर्धभ्रस्जदम्भुश्रिस्वृयूर्णुभरज्ञपिसनाम् इति सूत्रं व्याख्यात।

९. मुचोऽकर्मकस्य गुणो वा इति सूत्रं सोदाहरणं व्याख्यात।

१०. रुदविदमुषग्रहिस्वपिप्रच्छः संश्च इति सूत्रं सोदाहरणं व्याख्यात।



## पाठगतप्रश्नोत्तराणि

**उत्तराणि–१**

१. मूलधातुः-पठ्, सन्नन्तधातुः-पिपठिष।

२. सनाद्यन्ता धातवः।

३. इच्छार्थे।

४. न।

५. पठितुम् इच्छति।

६. जिघत्सति।

७. अज्झनगमां सनि।

८. गुणनिषेधः।

९. सन्-क्यच्-काम्यच्-क्यङ्-क्यषोऽथाचारक्विब्-णिज्-यङौ तथा।
यगायेयङ्–णिङ् चेति द्वादशाऽमी सनादयः।।

१०. बुभूषति।

**उत्तराणि–२**

११. सनि परे सति इङ्धातोः स्थाने गमि इत्यादेशो भवति इत्यर्थः।

१२. इण्धातोः स्थाने गमि इत्यादेशो भवति सन्प्रत्यये परे सति। न तु बोधनार्थे।

१३. पिपृच्छति।

१४. इडागमो भवति।

१५. किद्वद्भावः।

१६. जिघृक्षति।

१७. जुघुक्षति।



१८. अनित्यम्।

**उत्तराणि–३**

१९. तितांसति, तितंसति, तितनिषति इति रूपत्रयम्।

२०. सुषुप्सति।

२१. सन्-क्त्वा इत्यनयोः कित्त्वम्।

२२. रोदितुमिच्छति।

२३. सनीवन्तर्धभ्रस्जदम्भुश्रिस्वृयूर्णुभरज्ञपिसनाम्।

२४. जिगमिषति।

२५. विधिसूत्रम्।

॥इति पञ्चविंशः पाठः ॥



# २६

# परस्मैपदात्मनेपदप्रकरणम्।

## प्रस्तावना

पूर्वं भवन्तः भ्वादिप्रकरणेषु लकारपरिचयं प्राप्तवन्तः। तत्र धातोः विहितस्य लकारस्य स्थाने परस्मैपदम् आत्मनेपदं चेति द्विविधः तिङ्प्रत्ययः आदेशरूपेण विधीयते। केभ्यो धातुभ्यः परस्मैपदं केभ्यो वा आत्मनेपदं भवति इति अस्मिन् पाठे स्पष्टीक्रियते। अनुदात्तङित आत्मनेपदम् इति सूत्रम् अनुदात्तेत्धातुभ्यः ङित्धातुभ्यश्च आत्मनेपदं विदधाति। किञ्च कर्तृगामिनि क्रियाफले स्वरितेत्–धातुभ्यः ञित्–धातुभ्यश्च आत्मनेपदं विधीयते स्वरितञितः कर्त्रभिप्राये क्रियाफले इति योगेन। एवञ्च शेषात् अर्थात् आत्मनेपदार्थं निमित्तं नास्ति यो धातुः तस्माद्धातोः परस्मैपदं भवति, शेषात् कर्तरि परस्मैपदमिति शास्त्रेण। अर्थभेदेन उपसर्गादियोगेन च कुत्रचित् परस्मैपदं क्वचित् वा आत्मनेपदं भवति इत्यतः अस्मिन् पाठे विशेषस्थलानि प्रदर्शयितुं परस्मैपदात्मनेपदविधानम् आलोच्यते। तत्रादौ आत्मनेपदविधानमालोच्यते।



## उद्देश्यानि

इमं पाठं पठित्वा भवताम् –

- किम् आत्मनेपदं किञ्च परस्मैपदमिति ज्ञानं भविष्यति।
- क्वचित् आत्मनेपदे प्राप्तेऽपि न भवति इति विवको भविष्यति।
- क्वचित् परस्मैपदे प्राप्तेऽपि न भवति इति बोधो भविष्यति।
- क्वचित् अर्थभेदेन परस्मैपदात्मनेपदं भवति, क्वचित् वा उपसर्गबलेन इति विषये विस्पष्टं ज्ञानं स्यात्।

## आत्मनेपदप्रकरणम्

आत्मनेपदप्रकरणवशात् मूलं सूत्रम् आदौ आलोच्यते–

### [२६.१] अनुदात्तङित आत्मनेपदम्॥ (१.३.१२)

**सूत्रार्थः –** अनुदात्तेतः उपदेशे यो ङित्तदन्ताच्च धातोः लस्य स्थाने आत्मनेपदं स्यात्।

**सूत्रव्याख्या –** विधिसूत्रेऽस्मिन् पदद्वयमस्ति। अनुदात्तङितः (५/१), आत्मनेपदम् (१/१) इति सूत्रगतपदच्छेदः। अनुदात्तश्च ङ् च अनुदात्तङौ, तौ इतौ यस्य स अनुदात्तङित्, तस्मात् अनुदात्तङितः। भूवादयो धातवः इत्यत्रत्यप्रथमान्तस्य धातवः इत्यस्य पञ्चम्येकवचनान्ततया विपरिणामेन धातोः इत्यस्यानुवृत्तिर्भवति। एवञ्च अनुदात्तेत्–धातोः ङित्–धातोश्चेति आत्मनेपदम् अर्थात् तङ्प्रत्याहारस्थाः त–आताम्–झादिप्रत्यया भवन्ति। अतः अनुदात्तङित आत्मनेपदम् इति सूत्रसम्बन्धिधातवः आत्मनेपदिन धातव इत्युच्यन्ते।

**उदाहरणम् –** ङित्धातुः–शीङ् स्वप्ने इति धातोः ङकार इत्संज्ञकः तस्मात् प्रकृतसूत्रेण आत्मनेपदं भवति। ततः प्रथमपुरुषैकवचने शेते इति रूपं भवति।

बाधृ लोडने (प्रतिघाते) इति धातुः अनुदात्तेत्, अतः प्रकृतसूत्रेण आत्मनेपदे प्रथमपुरुषैकवचने बाधते इति रूपं भवति, किञ्च एध वृद्धौ इति धातुः अपि अनुदात्तेत् अस्ति तस्मात् प्रकृतसूत्रेण आत्मनेपदे प्रथमपुरुषैकवचने तप्रत्यये एधते इति रूपं भवति। एतेषां प्रक्रिया भ्वादिप्रकणेषु द्रष्टव्या।

भावार्थे कर्मार्थे च आत्मनेपदं भवति इति दर्शयितुं सूत्रमिदमारभ्यते –

### [२६.२] भावकर्मणोः॥ (१.३.१३)

**सूत्रार्थः –** भावकर्मणोः अर्थयोः धातोः विहितस्य लकारस्य स्थाने आत्मनेपदप्रत्ययो भवति।

**सूत्रव्याख्या –** विधिसूत्रमिदम् एकपदात्मकमस्ति। लः कर्मणि च भावे चाकर्मकेभ्यः इत्यतः लः इति पदम्, अनुदात्तङित आत्मनेपदम् इत्यतः आत्मनेपदम् इति पदं च अनुवर्तते। भावकर्मणोः इति सप्तमीद्विवचनान्तम्। भावः च कर्म च तयोः इतरेतरयोगद्वन्द्वे भावकर्मणी, तयोः भावकर्मणोः। भावार्थे कर्मार्थे च धातोः विहितस्य लकारस्य स्थाने आत्मनेपदप्रत्ययो भवति इति सूत्रार्थः सिध्यति। एवञ्च भाववाच्ये कर्मवाच्ये च आत्मनेपदं भवति, परस्मैपदं कदापि न भवति। तत्र धातुः आत्मनेपदी परस्मैपदी उभयपदी वा भवतु भाववाच्ये कर्मवाच्ये च आत्मनेपदमेव भवति।

**उदाहरणम् –** भावार्थस्य उदाहरणम्–बभुवे। कर्मार्थस्य उदाहरणम्–अनुबभूवे। एतयोः सविस्तरं व्याख्यानं भावकर्मप्रकरणे पश्यत।

क्रियाविनिमयार्थेऽपि धातोः आत्मनेपदं प्रदर्शयितुं सूत्रमिदमारभ्यते–



## [२६.३] कर्तरि कर्मव्यतिहारे॥ (१.३.१४)

**सूत्रार्थः** – क्रियाविनिमये द्योत्ये कर्तरि आत्मनेपदं भवति।

**सूत्रव्याख्या** – विधिसूत्रेऽस्मिन् पदद्वयमस्ति। कर्तरि (७/१), कर्मव्यतिहारे (७/१) इति सूत्रगतपदच्छेदः। कर्तरि इति सप्तम्येकवचनान्तम्। कर्मव्यतिहारे इत्यपि तथा। कर्मणः व्यतिहारः इति षष्ठीतत्पुरुषे कर्मव्यतिहारः, तस्मिन् कर्मव्यतिहारे। अनुदात्तङित आत्मनेपदम् इत्यतः आत्मनेपदम् इति पदमनुवर्तते। सूत्रेऽस्मिन् कर्मपदार्थः क्रिया। व्यतिहारपदार्थश्च विनिमयः। ततः कर्मव्यतिहारः इत्यस्य क्रियाविनिमय इत्यर्थः। कर्तृपदार्थश्च कर्तृवाच्यम्। एवञ्च क्रियाया विनिमये द्योत्ये कर्तृवाच्ये आत्मनेपदं भवतीति सूत्रार्थः।

**अत्र विशेषः**– कर्मव्यतिहारार्थस्य प्रकटनार्थं धातोः पूर्वं प्रायः वि–अति इति उपसर्गद्वयं प्रयुज्यते। कुत्रचित् तं विना अथवा अन्योपसर्गयोगेन व्यतिहारार्थः प्रकट्यते। यथा प्रियामुखं किंपुरुषश्चुचुम्बे (कालिदासः)।

**उदाहरणम्** – ब्राह्मणः क्षेत्रं व्यतिलुनीते (अन्यस्य योग्यां छेदनक्रियाम् अन्यः करोति)।

**सूत्रार्थसमन्वयः** – वि–अति पूर्वकात् लूञ् छेदने इति क्र्यादिगणीयात् उभयपदिनः धातोः प्रकृतसूत्रेण आत्मनेपदं विधीयते, छेदनक्रियाया व्यतिहारार्थस्य सत्त्वात्। अस्मात् धातोः ञित्त्वात् स्वरितञितः कर्त्रभिप्राये क्रियाफले इति योगेन पक्षे परगामिनि क्रियाफले परस्मैपदे प्राप्ते तं बाधित्वा केवलम् आत्मनेपदं विधातुमिदमारब्धम्।

पूर्वसूत्रेण यद् आत्मनेपदं विहितम्, तस्यैव अपवादं प्रदर्शयितुमयं योग आरभ्यते –

## [२६.४] न गतिहिंसार्थेभ्यः॥ (१.३.१५)

**सूत्रार्थः** – गमनार्थकधातुभ्यः हिंसार्थकधातुभ्यः च क्रियाया विनिमयार्थे द्योत्ये आत्मनेपदं न भवति।

**सूत्रव्याख्या** – निषेधसूत्रेऽस्मिन् पदद्वयमस्ति। न (अव्ययम्), गतिहिंसार्थेभ्यः (५/३) इति सूत्रगतपदच्छेदः। गतिश्च हिंसा च गतिहिंसे, गतिहिंसे अर्थौ येषां ते गतिहिंसार्थाः तेभ्यः गतिहिंसार्थेभ्यः इति द्वन्द्वगर्भबहुव्रीहिसमासः। कर्तरि कर्मव्यतिहारे इत्यतः कर्मव्यतिहारे इति पदस्य, अनुदात्तङित आत्मनेपदम् इत्यतः आत्मनेपदम् इति पदस्य चानुवृत्तिर्भवति। गतिहिंसार्थेभ्यः कर्मव्यतिहारे आत्मनेपदं न इति वाक्ययोजना। तथा च गमनार्थकधातुभ्यः हिंसार्थकधातुभ्यः च क्रियाया विनिमयार्थे द्योत्ये आत्मनेपदं न भवति इति सूत्रार्थः फलति।

**उदाहरणम्** – व्यतिगच्छन्ति।

**सूत्रार्थसमन्वयः** – वि–अति उपसर्गपूर्वकात् गमनार्थकात् गम् (गम्लृ गतौ. भ्वा.परस्मै) धातोः कर्मव्यतिहारार्थे कर्तरि कर्मव्यतिहारे इति सूत्रेण आत्मनेपदं प्राप्तम्। किन्तु प्रकृतसूत्रेण तन्निषेधो भवति गमनार्थकधातोः सत्त्वात्। ततः शेषात् कर्तरि परस्मैपदम् इत्यनेन परस्मैपदमेव भवति।

विश निवेशने इति तुदादिगणीयपरस्मैपदिधातोः आत्मनेपदमप्राप्तम् किन्तु नि इति उपसर्गयोगेन आत्मनेपदं यथा स्यात्, अतः सूत्रमिदमारभ्यते–

## [२६.५] नेर्विशः॥ (१.३.१७)

**सूत्रार्थः –** निपूर्वकात् विश्–धातोः परम् आत्मनेपदं भवति।

**सूत्रव्याख्या –** विधिसूत्रमिदं पदद्वयात्मकमस्ति। नेः (५/१), विशः (५/१) इति सूत्रगतपदच्छेदः। अनुदात्तङित आत्मनेपदम् इत्यतः आत्मनेपदम् इति पदस्यानुवृत्तिर्भवति। तेन सूत्रार्थः सिध्यति।

**उदाहरणम्–** निविशते ।

**सूत्रार्थसमन्वयः –** अत्र निपूर्वकः विश्–धातुः अस्ति। शेषात्कर्तरि परस्मैपदम् इत्यनेन परस्मैपदे प्राप्ते प्रकृतसूत्रेण आत्मनेपदं विधीयते। यतो हि अत्र निपूर्वकः विशधातुः अस्ति। नैषधीयकारस्य श्रीहर्षस्यापि प्रयोगः अस्ति– निविशते यदि शूकशिखा पदे (४.११)।

डुक्रीञ् द्रव्यविनिमये इति धातोः ञित्त्वात् पक्षे परगामिनि क्रियाफले शेषात्कर्तरि परस्मैपदम् इत्यनेन परस्मैपदे प्राप्ते अपवादसूत्रमिदमारभ्यते–

## [२६.६] परिव्यवेभ्यः क्रियः॥ (१.३.१८)

**सूत्रार्थः –** परि, वि, अव इति उपसर्गेभ्यः परः यः क्रीधातुः तस्मात् आत्मनेपदं भवति।

**सूत्रव्याख्या –** विधिसूत्रमिदं पदद्वयात्मकमस्ति। परिव्यवेभ्यः (५/३), क्रियः (५/१) इति सूत्रगतपदच्छेदः। परिश्च विश्च अवश्च तेषामितरेतरयोगद्वन्द्वे परिव्यवाः, तेभ्यः परिव्यवेभ्यः। अनुदात्तङित आत्मनेपदम् इत्यतः आत्मनेपदम् इति पदस्यानुवृत्तिर्भवति। परि, वि, अव इति उपसर्गेभ्यः परः यः क्रीधातुः तस्मात् आत्मनेपदं भवति इत्येवं पूर्वोक्तः अर्थः सिध्यति। स्वरितञितः कर्त्रभिप्राये क्रियाफले इत्यनेन कर्तृगामिनि क्रियाफले आत्मनेपदं प्राप्तम्। किन्तु प्रकृतसूत्रेण अकर्तृगामिनि क्रियाफलेऽपि आत्मनेपदमेव यथा स्यात्, किन्तु परस्मैपदं न स्यात्। अतः सूत्रमिदमारब्धम्।

**उदाहरणम् –** परिक्रीणीते इत्यत्र परिपूर्वकः क्रीधातुरस्ति। विक्रीणीते इत्यत्र विपूर्वकः क्रीधातुरस्ति। अवक्रीणीते इत्यत्र अवपूर्वकः क्रीधातुरस्ति।

जि जये इति परस्मैपदिनः भ्वादिगणीयधातोः शेषात्कर्तरि परस्मैपदम् इत्यनेन परस्मैपदे प्राप्ते विशिष्टोपसर्गयोगेन आत्मनेपदविधानार्थमयं योग आरभ्यते –

## [२६.७] विपराभ्यां जेः॥ (१.३.१९)

**सूत्रार्थः –** वि–उपसर्गपूर्वकात् परा–उपसर्गपूर्वकात् च परस्य जिधातोः आत्मनेपदं भवति।



**सूत्रव्याख्या** – विधिसूत्रेऽस्मिन् पदद्वयमस्ति। विपराभ्याम् (५/२), जेः (५/१) इति सूत्रगतपदच्छेदः। विश्च पराश्च विपरौ, ताभ्यां विपराभ्याम्, इति इतरेतरयोगद्वन्द्वः। अनुदात्तङित आत्मनेपदम् इत्यतः आत्मनेपदम् इति पदस्यानुवृत्तिर्भवति। तथा च प्रागुक्तार्थः सिध्यति।

**अत्र विशेषः** – केवलः जिधातुस्तु परस्मैपदी भवति किन्तु वि–परा इत्युपसर्गद्वययोगेन जिधातुः आत्मनेपदं भवति। एवञ्च सूत्रमिदं शेषात्कर्तरि परस्मैपदम् इत्यस्यापवादभूतमस्ति।

**उदाहरणम्** – विजयते इत्यत्र विपूर्वकः जिधातुरस्ति। पराजयते इत्यत्र परापूर्वकः जिधातुः वर्तते।

ष्ठा गतिनिवृत्तौ (भ्वादि.परस्मै.)धातोः शेषात्कर्तरि परस्मैपदम् इत्यनेन परस्मैपदे प्राप्ते विशिष्टोपसर्गयोगेन आत्मनेपदविधानार्थम् अयं योग आरभ्यते–

## [२६.८] समवप्रविभ्यः स्थः॥ (१.३.२२)

**सूत्रार्थः** – सम्पूर्वकात् अवपूर्वकात् प्रपूर्वकात् विपूर्वकात् च स्थाधातोः आत्मनेपदं भवति।

**सूत्रव्याख्या** – विधिसूत्रमिदं पदद्वयात्मकमस्ति। समवप्रविभ्यः (५/३), स्थः (५/१) इति सूत्रगतपदच्छेदः। सम् च अवश्च प्रश्च विश्च समवप्रविभ्यः तेभ्यः समवप्रविभ्यः, इति इतरेतरयोगद्वन्द्वः। अनुदात्तङित आत्मनेपदम् इत्यतः आत्मनेपदम् इति पदस्यानुवृत्तिर्भवति। एवञ्च पूर्वोक्तार्थः सिध्यति।

**उदाहरणम्** – सम्–स्था–सन्तिष्ठते। अव–स्था–अवतिष्ठते। प्र–स्था–प्रतिष्ठते। वि–स्था–वितिष्ठते।



## पाठगतप्रश्नाः-१

१. कः कर्मव्यतिहारः।

२. सम्पूर्वकस्थाधातोः आत्मनेपदं भवति किम्। भवति चेत् किं रूपम्।

३. विपराभ्यां जेः इत्यस्य उदाहरणं किम्।

४. आत्मनेपदप्रत्ययविधायकसूत्रं लिखत।

५. व्यतिगच्छन्ति इत्यत्र आत्मनेपदं कुतो न।

६. नेर्विशः इत्यस्य उदाहरणं किम्।

७. विक्रीणीते विक्रीणाति इत्यनयोः कतरत् साधु।

८. व्यतिलुनीते इत्यस्य कोऽर्थः।

---

ज्ञा अवबोधने (क्र्या.परस्मै) धातोः शेषात्कर्तरि परस्मैपदम् इत्यनेन परस्मैपदे प्राप्ते आत्मनेपदविधानार्थं सूत्रमिदमारभ्यते –



## [२६.९] अपह्नवे ज्ञः॥ (१.३.४४)

**सूत्रार्थः** – अपलापे अर्थे ज्ञाधातोः परम् आत्मनेपदं भवति।

**सूत्रव्याख्या** – विधिसूत्रमिदं पदद्वयात्मकमस्ति। अपह्नवे (७/१), ज्ञः (५/१) इति सूत्रगतपदच्छेदः। अपह्नवे इति सप्तम्येकवचनान्तम्। ज्ञः इति पञ्चम्येकवचनान्तम्। अनुदात्तङित आत्मनेपदम् इत्यतः आत्मनेपदम् इति पदस्यानुवृत्तिर्भवति। अपह्नवः अपलापः। तथा च अपलापार्थे गम्यमाने ज्ञाधातोः आत्मनेपदमेव भवति इति सिध्यति।

**अत्र विशेषः** – उपसर्गरहितावस्थायां ज्ञाधातोः अपलापः अर्थो नास्ति। अयमर्थस्तु अप इति उपसर्गयोगेन लभ्यते। अतः अपपूर्वकज्ञाधातोः अस्मिन्नर्थे क्रियाफलस्य कर्तृगामिनि परगामिनि वा आत्मनेपदं भवति।

**उदाहरणम्** – शतम् अपजानीते। अस्य वाक्यस्य शतम् अपलपतीत्यर्थः। अत्र अपपूर्वकज्ञाधातुः अपलापे अर्थे वर्तते।

चर गतौ भक्षणे च (भ्वा.परस्मै) धातोः शेषात्कर्तरि परस्मैपदम् इत्यनेन परस्मैपदे प्राप्ते आत्मनेपदार्थमयं योग आरभ्यते–

## [२६.१०] समस्तृतीयायुक्तात्॥ (१.३.५४)

**सूत्रार्थः** – तृतीयान्तपदेन युक्तात् समः परस्मात् चर्–धातोः आत्मनेपदं भवति।

**सूत्रव्याख्या** – विधिसूत्रमिदं पदद्वयात्मकमस्ति। समः (५/१), तृतीयायुक्तात् (५/१) इति सूत्रगतपदच्छेदः। तृतीयया युक्तः तृतीयायुक्तः तस्मात् तृतीयायुक्तात् इति तृतीयातत्पुरुषः। अनुदात्तङित आत्मनेपदम् इत्यतः आत्मनेपदम् इति पदस्यानुवृत्तिर्भवति। उदश्चरः सकर्मकात् इत्यतः चर इत्यस्यानुवृत्तिर्भवति। एवं सूत्रार्थः सिध्यति।

**उदाहरणम्** – रथेन सञ्चरते।

**सूत्रार्थसमन्वयः** – रथेन इति तृतीयान्तपदेन युक्तः धातुरस्ति सम्पूर्वकः चर् इति। अतः प्रकृतसूत्रेण चर्–धातोः आत्मनेपदं विधीयते। तेन सञ्चरते इति रूपं सिध्यति। तथा च कालिदासस्य प्रयोगः – क्वचित् पथा सञ्चरते सुराणाम् (रघु. १३.१९)। यदा तृतीयान्तपदाभावः तदा तु आत्मनेपदं न भवति यथा – उभौ लोकौ सञ्चरसि इमं चामुं च देवल। (काशिका)।

दाण् दाने (भ्वा.परस्मै)धातोः शेषात्कर्तरि परस्मैपदम् इत्यनेन परस्मैपदे प्राप्ते अपवादसूत्रमिदमारब्धम्–

## [२६.११] दाणश्च सा चेच्चतुर्थ्यर्थे॥ (१.३.५५)

**सूत्रार्थः** – तृतीयान्तपदेन युक्तात् सम्पूर्वकात् दाण्धातोः आत्मनेपदं भवति यदि तृतीया चतुर्थ्याः अर्थे प्रयुक्ता भवति।



**सूत्रव्याख्या** – विधिसूत्रेऽस्मिन् पञ्च पदानि सन्ति। दाणः (५/१), च (अव्ययम्) सा (१/१) चेत् (अव्ययम्) चतुर्थ्यर्थे (७/१) इति सूत्रगतपदच्छेदः।चतुर्थ्याः अर्थः चतुर्थ्यर्थः, तस्मिन् चतुर्थ्यर्थे इति षष्ठीतत्पुरुषः। अनुदात्तङित आत्मनेपदम् इत्यतः आत्मनेपदम् इति पदस्यानुवृत्तिर्भवति। समस्तृतीयायुक्तात् इति सूत्रमनुवर्तते। एवञ्च तृतीयान्तपदेन युक्तात् सम्पूर्वकात् दाण्धातोः आत्मनेपदं भवति यदि तृतीया चतुर्थ्याः अर्थे प्रयुक्ता भवति। चतुर्थ्याः अर्थे तृतीया तु अशिष्टव्यवहारे दाणः प्रयोगे चतुर्थ्यर्थे तृतीया वाच्या इति वार्तिकेन विधीयते इति कारकप्रकरणे ज्ञास्यति।

**अत्र विशेषः** – समस्तृतीयायुक्तात् (१.३.५४), दाणश्च सा चेच्चतुर्थ्यर्थे (१.३.५५) इति सूत्रद्वयम् अपरेण केनचित् उपसर्गेन व्यवहितेऽपि प्रवर्तते। यथा – धर्मम् उदाचरते इत्यत्र उत् –चर् इत्यनयोर्मध्ये आङ् इत्युपसर्गः वर्तते तदापि प्रकृतसूत्रेण आत्मनेपदं भवति।

**उदाहरणम्** – दास्या संयच्छते कामुकः।

**सूत्रार्थसमन्वयः** – दास्या संयच्छते कामुकः इत्यत्र दास्या सह कामुकसम्पर्क एव अत्र अशिष्टव्यवहारशब्देन उच्यते। दास्यीमुद्दिश्य एव तादृशसम्पर्कः क्रियते। अतः दासी अत्र सम्प्रदानम्। तेन सम्प्रदाने चतुर्थी इत्यनेन चतुर्थी प्राप्तास्ति किन्तु अशिष्टव्यवहारे दाणः प्रयोगे चतुर्थ्यर्थे तृतीया वाच्या इत्यनेन चतुर्थीं बाधित्वा तृतीया विधीयते। एवञ्च प्रकृतसूत्रस्य अवकाशः लब्धः। अतः आत्मनेपदप्रयोगः।

सन्नन्तादात्मनेपदविधानार्थं सूत्रमिदमारभ्यते–

## [२६.१२] पूर्ववत्सनः॥ (१.३.६२)

**सूत्रार्थः** – सनः पूर्वो यो धातुस्तेन तुल्यं सन्नन्तादप्यात्मनेपदं स्यात्।

**सूत्रव्याख्या** – विधिसूत्रमिदं पदद्वयात्मकमस्ति। पूर्ववत् (अव्ययम्), सनः (५/१) इति सूत्रगतपदच्छेदः। पूर्वेण इव पूर्ववत्। तेन तुल्यं क्रिया चेद्वतिः इति पूर्वशब्दात् वतिप्रत्ययः। अनुदात्तङित आत्मनेपदम् इत्यतः आत्मनेपदम् इति पदस्यानुवृत्तिर्भवति। सन्प्रत्ययात् पूर्वं यः आत्मनेपदी धातुः तेन तुल्यं सन्नन्तधातोरपि आत्मनेपदं भवति।

**अत्र विशेषः** – यदि केनचित् उपसर्गयोगेन कश्चित् धातुः आत्मनेपदं भवति तदा तस्मिन् उपसर्गे सति सन्नन्तात्परमपि तस्मात् धातोः आत्मनेपदं भवति यथा– निविविक्षते। अत्र नेर्विशः इति सूत्रेण निपूर्वकविश्धातोः आत्मनेपदं विधीयते। एवमेव सन्नन्तादपि विश्धातोः आत्मनेपदं भवति।

**उदाहरणम्** – शिशयिषते।

**सूत्रार्थसमन्वयः** – शीङ् स्वप्ने इति धातोः ङित्त्वात् आत्मनेपदी अस्ति। अतः अस्मात् धातोः सन्प्रत्यये विहिते सति शिशयिषते इति रूपं सिध्यति। एवमेव एध वृद्धौ इति धातुः अनुदात्तेत् अस्ति इति हेतोः आत्मनेपदी अस्ति। तस्मात् सन्प्रत्ययात् परमपि अर्थात् सन्नन्तात् एध्धातोरपि आत्मनेपदं भवति। तेन एदिधिषते इति रूपं सिध्यति। डुकृञ् करणे इति धातुः ञित्त्वात् आत्मनेपदी भवति कर्तृगामिनि क्रियाफले सति। अतः सन्नन्तात् परमपि आत्मनेपदं भवति। अतः चिकीर्षते इति रूपं सिध्यति। परगामिनि क्रियाफले तु चिकीर्षति इति रूपं सिध्यति। यदा तु धातुः आत्मनेपदनिमित्तहीनः तदा तु

सन्नन्तात्परमपि परस्मैपदमेव भवति न तु आत्मनेपदं, यथा– भूधातोः बुभूषति इति रूपं भवति, गम्धातोः जिगमिषति इति रूपं भवति।

डुकृञ् करणे इति तनादिगणीयधातोः कर्तृगामिनि क्रियाफले आत्मनेपदं भवति। परगामिनि क्रियाफले तु परस्मैपदं भवति इति भवन्तः जानन्ति एव। तत्र परगामिनि क्रियाफलेऽपि आत्मनेपदविधानार्थं सूत्रमिदमारभ्यते –

## [२६.१३] गन्धनाऽवक्षेपणसेवनसाहसिक्यप्रतियत्नप्रकथनोपयोगेषु कृञः (१.३.३२)

**सूत्रार्थः** – गन्धनम्, अवक्षेपणं, सेवनं, साहसिक्यं, प्रतियत्नः, प्रकथनम्, उपयोगः इत्येतेषु अर्थेषु कृधातोः आत्मनेपदं भवति।

**सूत्रव्याख्या** – विधिसूत्रमिदं पदद्वयात्मकमस्ति। गन्धनाऽवक्षेपणसेवनसाहसिक्यप्रतियत्नप्रकथनोपयोगेषु (७.३), कृञः (५/१) इति सूत्रगतपदच्छेदः। गन्धनञ्च अवक्षेपणञ्च सेवनञ्च साहसिक्यञ्च प्रतियत्नञ्च प्रकथनञ्च उपयोगश्च तेषामितरेतरयोगद्वन्द्वे गन्धनाऽवक्षेपणसेवनसाहसिक्यप्रतियत्नप्रकथनोपयोगाः तेषु गन्धनाऽवक्षेपणसेवनसाहसिक्यप्रतियत्नप्रकथनोपयोगेषु। अनुदात्तङित आत्मनेपदम् इत्यतः आत्मनेपदम् इति पदस्यानुवृत्तिर्भवति। गन्धनं सूचनं , गन्धनम् अपकारप्रयुक्तं हिंसात्मकं कर्म इति काशिका। अवक्षेपणं भर्त्सनम्। बलेन प्रवृत्तस्य कर्म साहसिक्यमित्युच्यते। प्रतियत्नः उत्पादनम्। प्रकर्षेण कथनं प्रकथनम्। एवञ्च गन्धनम्, अवक्षेपणं, सेवनं, साहसिक्यं, प्रतियत्नः, प्रकथनम्, उपयोगः इत्येतेषु अर्थेषु कृधातोः आत्मनेपदं भवति इति सूत्रार्थः सिध्यति।

उदाहरणानि–

१. **गन्धनम्** – स तमुत्कुरुते। स तं सूचयति इति वाक्यार्थः।
२. **अवक्षेपणम्** – श्येनो वर्तिकाम् उदाकुरुते। श्येनो वर्तिकां भर्त्सयति इति वाक्यार्थः। एवमेव दुर्वृत्तान् अवकुरुते।
३. **सेवनम्** – हरिम् उपकुरुते भक्तः। हरिं सेवते भक्तः इति वाक्यार्थः।
४. **साहसिक्यम्** – परदारान् प्रकुरुते कामुकः। परदारेषु बलेन प्रवर्तते कामुकः इति वाक्यार्थः।
५. **प्रतियत्नः** – एधोदकस्य उपस्कुरुते। गुणम् आधत्ते इत्यर्थः।
६. **प्रकथनम्** – गाथाः प्रकुरुते गायकः। प्रकथयति इत्यर्थः।
७. **उपयोगः** – शतं प्रकुरुते वणिक्। शतं व्ययीकरोति इत्यर्थः

एतद्भिन्नार्थे तु आत्मनेपदं न भवति यथा कटं करोति इति। किन्तु अत्र कर्त्रभिप्राये क्रियाफले आत्मनेपदं भवितुमर्हति। एवम् आत्मनेपदप्रक्रिया समाप्ता।





## पाठगतप्रश्नाः-२

९. शतम् अपजानीते इति वाक्यस्य कोर्थः।

१०. अपजानीते इत्यत्र अपपूर्वकज्ञाधातुः कस्मिन्नर्थेऽस्ति।

११. समस्तृतीयायुक्तात् इत्यस्य किमुदाहरणम्।

१२. गन्धनादिसूत्रं पूरयत।

१३. उत्कुरुते इति पदस्य कोऽर्थः।

१४. पूर्ववत्सनः इत्यस्य कोऽर्थः।

१५. प्रकुरुते इत्यस्य कोऽर्थः।

१६. दास्या संयच्छते कामुकः इत्यत्र आत्मनेपदं केन भवति।

# अथ परस्मैपदप्रक्रिया

धातोः विहितस्य लकारस्य स्थाने परस्मैपदात्मनेपदाख्यः द्विविधः तिङ्प्रत्ययः आदेशरूपेण विधीयते इति भवन्तः पूर्वं ज्ञातवन्त एव। तत्र आत्मनेपदविषयेऽपि ज्ञातवन्तः। अधुना परस्मैपदविषये उच्यते। परस्मैपदविधानविषयकं मुख्यं सूत्रद्वयमस्ति। स्वरितञितः कर्त्रभिप्राये क्रियाफले इति एकम् अपरं तावत् शेषात् कर्तरि परस्मैपदम् इति। आद्येन तु परगामिनि क्रियाफले परस्मैपदं विधीयते इति आत्मनेपदप्रकरणस्यारम्भे उक्तमेवास्ति। आत्मेपदविधानार्थं यावन्ति निमित्तानि सन्ति तन्निमित्तहीनात् धातोः परस्मैपदं विधीयते यथा भवति, पठति, वदति इत्यादि। किन्तु अयं साधारणः नियमः। अधुना विशेषनियम उच्यते। तत्र उभयपदिधातुभ्यः कर्त्रभिप्राये क्रियाफले प्राप्तस्य आत्मनेपदस्य बाधः क्रियते अथवा आत्मनेपदिधातुभ्यः प्राप्तस्य आत्मनेपदस्य साक्षात् बाधो विधीयते। तानि सूत्राणि अत्र व्याख्यायन्ते।

कृधातोः ञित्त्वात् परगामिनि क्रियाफले परस्मैपदं सिद्धमस्ति, कर्तृगामिनि क्रियाफले च आत्मनेपदमपि सिद्धमस्ति। किन्तु कर्तृगामिनि क्रियाफलेऽपि विशिष्टोपसर्गयोगेन परस्मैपदमात्रविधानार्थं विधिसूत्रमिदमारभ्यते –

## [२६.१४] अनुपराभ्यां कृञः॥ (१.३.७९)

**सूत्रार्थः** – अनु इत्युपसर्गपूर्वकात् परा इत्युपसर्गपूर्वकात् च कृधातोः परस्मैपदं भवति।

**सूत्रव्याख्या** – विधिसूत्रमिदं पदद्वयात्मकमस्ति। अनुपराभ्याम् (५/२) कृञः (५/१) इति सूत्रगतपदच्छेदः। अनुश्च पराश्च तयोरितरेतरयोगद्वन्द्वे अनुपरौ ताभ्याम् अनुपराभ्याम्। शेषात् कर्तरि परस्मैपदम् इत्यतः कर्तरि परस्मैपदम् इत्यनयोः अनुवृत्तिः भवति। अनु इत्युपसर्गपूर्वकात् परा



इत्युपसर्गपूर्वकात् च कृधातोः परस्मैपदं भवति इति सूत्रार्थः। कृधातुः ञित् अस्ति अतः परगामिनि क्रियाफले परस्मैपदं प्राप्तमस्ति एव । तस्मात् कर्तृगामिनि क्रियाफले परस्मैपदविधानार्थम् इदं सूत्रम्। किञ्च गन्धनम्, अवक्षेपणं, सेवनं, साहसिक्यं, प्रतियत्नः, प्रकथनम्, उपयोगः इत्येतेषु अर्थेषु परगामिनि क्रियाफले कृधातोः यदात्मनेपदं प्राप्तं तस्यापि अपवादोऽयं योगः।

**अत्र विशेषः** – सूत्रेऽस्मिन् शेषात् कर्तरि परस्मैपदम् इत्यतः कर्तरि इति पदस्यानुवृत्तिर्भवति। अतः कर्तृवाच्ये एवायं प्रयोगः। कर्मवाच्ये तु भावकर्मणोः इति आत्मनेपदं भवति। यथा–अनुक्रियते साध्वी पद्धतिः। पराक्रियते समुपस्थिता बाधा।

**उदाहरणम्** – अनुकरोति, पराकरोति। अत्र अनु परा इत्युपसर्गपूर्वकः कृधातुरस्ति।

क्षिप प्रेरणे इति स्वरितेतः धातोः कर्तृगामिनि क्रियाफले आत्मनेपदे प्राप्ते तं बाधितुं परस्मैपदविधानार्थं सूत्रमिदमारभ्यते –

## [२६.१५] अभिप्रत्यतिभ्यः क्षिपः॥ (१.३.८०)

**सूत्रार्थः** – अभि–उपसर्गपूर्वकात् प्रति–उपसर्गपूर्वकात् अति–उपसर्गपूर्वकात् च क्षिप्–धातोः परस्मैपदं भवति।

**सूत्रव्याख्या** – विधिसूत्रमिदं पदद्वयात्मकमस्ति। अभिप्रत्यतिभ्यः (५/३) क्षिपः (५/१) इति सूत्रगतपदच्छेदः। अभिश्च प्रतिश्च अतिश्च तेषामितरेतरयोगद्वन्द्वे अभिप्रत्यतयः, तेभ्यः अभिप्रत्यतिभ्यः। शेषात् कर्तरि परस्मैपदम् इत्यतः कर्तरि, परस्मैपदम् इत्यनयोः अनुवृत्तिः भवति। तथा च पूर्वोक्तार्थः सिध्यति।

**अत्र विशेषः** – तुदादिगणीयः अयं धातुः स्वरितेत् अस्ति। अतः कर्तृगामिनि क्रियाफले आत्मनेपदं प्राप्तम्। किन्तु तद्बाधनार्थमयं योगः आरभ्यते। अभि–प्रति–अति इत्युपसर्गस्थले केवलं परस्मैपदं भवतु अन्यत्र तु उभयपदी अयं धातुः स्यादिति नियमयितुमिदमारभ्यते।

**उदाहरणम्** – अभिक्षिपति। प्रक्षिपति।अतिक्षिपति।

वह्–धातोः उभयपदित्वात् कर्तृगामिनि क्रियाफले आत्मनेपदे प्राप्ते विशिष्टोपसर्गयोगेन तत्रापि परस्मैपदविधानार्थमयं योग आरभ्यते –

## [२६.१६] प्राद्वहः॥ (१.३.८१)।

**सूत्रार्थः** – प्र–उपसर्गपूर्वकात् वह्–धातोः परस्मैपदं भवति।

**सूत्रव्याख्या** – विधिसूत्रमिदं पदद्वयात्मकमस्ति। प्रात् वहः इति सूत्रगतपदच्छेदः। प्रात् वहः इत्युभयमपि पञ्चम्येकवचनान्तम्। शेषात् कर्तरि परस्मैपदम् इत्यतः कर्तरि परस्मैपदम् इत्यनयोः पदयोः अनुवृत्तिः भवति। तेन प्रागुक्तार्थः सिध्यति।

**उदाहरणम्** – प्रवहति।

मृष्धातोः कर्त्रभिप्राये क्रियाफले परस्मैपदविधानार्थं सूत्रमिदमारभ्यते –



## [२६.१७] परेर्मृषः॥ (१.३.८१)

**सूत्रार्थः** – परि–उपसर्गपूर्वकात् मृष्धातोः परस्मैपदं भवति।

**सूत्रव्याख्या** – विधिसूत्रमिदं पदद्वयात्मकमस्ति। परेः मृषः इति सूत्रगतपदच्छेदः। परेः मृषः इत्युभयमपि पञ्चम्येकवचनान्तम्। शेषात् कर्तरि परस्मैपदम् इत्यतः कर्तरि परस्मैपदम् इत्यनयोः अनुवृत्तिः भवति। तेन प्रागुक्तार्थः सिध्यति।

**उदाहरणम्** – परिमृष्यति।

**सूत्रार्थसमन्वयः** – मृष तितिक्षायाम् इति दिवादिगणीयधातुः स्वरितेत् अस्ति। अतः स्वरितञितः कर्त्रभिप्राये क्रियाफले इत्यनेन कर्त्रभिप्राये क्रियाफले आत्मनेपदं प्राप्तम्। तद् बाधित्वा परेर्मृषः इति सूत्रेण परस्मैपदे परिमृष्यति इति रूपं सिध्यति।

भ्वादिगणीयात् मृषु सहने इति धातोः परि–उपसर्गपूर्वकात् प्रकृतसूत्रेण परस्मैपदे परिमर्षति इति रूपं भवति।

रम्–धातोः परस्मैपदविधानार्थं विधिसूत्रमिदमारभ्यते –

## [२६.१८] व्याङ्परिभ्यो रमः॥ (१.३.८३)

**सूत्रार्थः** – वि–उपसर्गपूर्वकात् आङ्–उपसर्गपूर्वकात् परि–उपसर्गपूर्वकात् च रम्–धातोः परस्मैपदं विधीयते।

**सूत्रव्याख्या** – विधिसूत्रमिदं पदद्वयात्मकमस्ति। व्याङ्परिभ्यः (५/३), रमः (५/१) इति सूत्रगतपदच्छेदः। विश्च आङ् च परिश्च तेषामितरेतरयोगद्वन्द्वे व्याङ्परयः तेभ्यः व्याङ्परिभ्यः। शेषात् कर्तरि परस्मैपदम् इत्यतः कर्तरि परस्मैपदम् इत्यनयोः अनुवृत्तिः भवति। तेन प्रागुक्तार्थः सिध्यति।

**उदाहरणम्** – विरमति । आरमति। परिरमति।

उप–उपसर्गपूर्वकात् रम्–धातोरपि परस्मैपदविधानार्थं सूत्रमिदमारभ्यते–

## [२६.१९] विभाषाकर्मकात्॥ (१.३.८५)

**सूत्रार्थः** –उप–उपसर्गपूर्वक–रम्धातोः विकल्पेन परस्मैपदं विधीयते अकर्मकस्थले।

**सूत्रव्याख्या** – विधिसूत्रमिदं पदद्वयात्मकमस्ति। विभाषा (अव्ययम्) अकर्मकात् (५/१) इति सूत्रगतपदच्छेदः। उपाच्च इत्यतः उपात् इत्यस्यानुवृत्तिर्भवति। व्याङ्परिभ्यो रमः इत्यतः रमः इत्यस्य, शेषात् कर्तरि परस्मैपदम् इत्यतः परस्मैपदम् इत्यस्य चानुवृत्तिर्भवति। तेन पूर्वोक्तार्थः सिध्यति।

**उदाहरणम्** – उपरमति, उपरमते।

**सूत्रार्थसमन्वयः** – उपरमति इत्यत्र निवृत्तो भवति इत्यर्थोऽस्तीति हेतोः उप–रम् धातुः अकर्मकावस्थायां वर्तते। अतः प्रकृतसूत्रेण विकल्पेन परस्मैपदं भवति, पक्षे तु उपरमते इत्यात्मनेपदमपि भवति।

णिचश्च इत्यनेन परस्मैपदात्मनेपदयोः प्राप्तयोः केवलं परस्मैपदविधानार्थं सूत्रमिदमारभ्यते –

## [२६.२०] बुधयुधनशजनेङ्प्रुद्रुस्रुभ्यो णेः॥ (१.३.८४)

**सूत्रार्थः**–बुध–युध–नश–जन–इङ–प्रु–द्रु–स्रु इत्येतेभ्यो धातुभ्यः परस्मैपदं भवति।

**सूत्रव्याख्या** – विधिसूत्रमिदं पदद्वयात्मकमस्ति। बुधयुधनशजनेङ्प्रुद्रुस्रुभ्यः (५/३), णेः (५/१) इति सूत्रगतपदच्छेदः। बुधश्च युधश्च नशश्च जनश्च इङ् च प्रुश्च द्रुश्च स्रुश्च तेषामितरेतरयोगद्वन्द्वे बुधयुधनशजनेङ्प्रुद्रुस्रुवः तेभ्यः बुधयुधनशजनेङ्प्रुद्रुस्रुभ्यः। शेषात् कर्तरि परस्मैपदम् इत्यतः कर्तरि परस्मैपदम् इत्यनयोः अनुवृत्तिः भवति। णिः इत्यनेन णिजन्तो गृह्यते। एवञ्च सूत्रार्थस्तावत् – बुध–युध–नश–जन–इङ–प्रु–द्रु–स्रु इत्येतेभ्यो ण्यन्तेभ्यः धातुभ्यः परस्मैपदं भवति इति।

**अत्र विशेषः** – पूर्वोक्तेभ्यो धातुभ्यो यदि णिच्प्रत्ययो भवति तदा णिचश्च इत्यनेन परगामिनि क्रियाफले विवक्षिते परस्मैपदं भवति, कर्तृगामिनि क्रियाफले विवक्षिते आत्मनेपदं भवति इति अवस्थायां कर्तृगामिनि क्रियाफलेऽपि परस्मैपदं भवतु इत्येतदर्थं सूत्रमिदमारभ्यते। अतः योगोऽयं णिचश्च इति सूत्रस्यापवादः।

उदाहरणम्– बोधयति पद्मम्। योधयति काष्ठानि। नाशयति दुःखम्। जनयति सुखम्। अध्यापयति वेदम्। प्रावयति प्रापयतीत्यर्थः। द्रावयति विलापयतीत्यर्थः। स्रावयति स्यन्दयतीत्यर्थः।

णिचश्च इत्यनेन उभयोः पदयोः प्राप्तयोः केवलं परस्मैपदविधानार्थं सूत्रमिदमारभ्यते –

## [२६.२१] निगरणचलनार्थेभ्यश्च॥ (१.३.८७)

**सूत्रार्थः** – भक्षणार्थकेभ्यः चलनार्थकेभ्यः च ण्यन्तेभ्यो धातुभ्यः कर्तृगामिनि क्रियाफलेऽपि परस्मैपदं भवति।

**सूत्रव्याख्या** – विधिसूत्रमिदं पदद्वयात्मकस्ति। निगरणचलनार्थेभ्यः (५/३) च इति सूत्रगतपदच्छेदः। निगरणं च चलनं च निगरणचलने इति इतरेतरयोगद्वन्द्वः, तौ अर्थौ येषां ते निगरणचलनार्थाः तेभ्यः निगरणचलनार्थेभ्यः। शेषात् कर्तरि परस्मैपदम् इत्यतःकर्तरि परस्मैपदम् इत्यस्य च अनुवृत्तिः भवति। बुधयुधनशजनेङ्प्रुद्रुस्रुभ्यो णेः इत्यतः णेः इत्यस्यानुवृत्तिर्भवति। भक्षणार्थकेभ्यः चलनार्थकेभ्यः च ण्यन्तेभ्यो धातुभ्यः कर्तृगामिनि क्रियाफलेऽपि परस्मैपदं भवति इति प्रागुक्तार्थः सिध्यति।

**उदाहरणम्** – निगारयति। आशयति। आदयति। खादयति। भोजयति। चलयति। कम्पयति।

कर्तृगामिनि क्रियाफले आत्मनेपदे प्राप्ते तत्र परस्मैपदविधानार्थं, परगामिनि क्रियाफले च परस्मैपदविधानार्थम् इत्युभयत्रापि परस्मैपदविधानार्थं सूत्रमिदमारभ्यते –



## [२६.२२] अणावकर्मकाच्चित्तवत्कर्तृकात्॥ (१.३.८८)

**सूत्रार्थः** – अणावकर्मकाच्चित्तवत्कर्तृकात् ण्यन्तात् परस्मैपदं स्यात्।

**सूत्रव्याख्या** – विधिसूत्रेऽस्मिन् त्रीणि पदानि सन्ति। अणौ (७/१), अकर्मकात् (५/१), चित्तवत्कर्तृकात् (५/१) इति सूत्रगतपदच्छेदः। न णिः अणिः तस्मिन् अणौ। न विद्यते कर्म यस्य स अकर्मकः, तस्मात् अकर्मकात्, बहुव्रीहिः। चित्तम् अस्य अस्तीति चित्तवान्। चित्तवान् कर्ता यस्य स चित्तवत्कर्तृकः तस्मात् चित्तवत्कर्तृकात्, बहुव्रीहिः। बुधयुधनशजनेङ्प्रुद्रुस्रुभ्यो णेः इत्यतः णेः इत्यस्य, शेषात् कर्तरि परस्मैपदम् इत्यतः परस्मैपदम् इत्यस्य च अनुवृत्तिर्भवति। एवञ्च अण्यन्तावस्थायां यः धातुः अकर्मकः चित्तवत्कर्तृकः च भवति तस्मात् धातोः ण्यन्तावस्थायां कर्तृगामिनि क्रियाफलेऽपि परस्मैपदं भवति इति सूत्रस्य सम्पूर्णार्थः।

**विशेषः** – सूत्रमिदं णिचशच इति योगस्य अपवादभूतम्।

**उदाहरणम्** – शेते कृष्णः, तं गोपी शाययति।

**सूत्रार्थसमन्वयः** – शीङ् स्वप्ने इति धातुः अण्यन्तावस्थायाम् अकर्मक एवास्ति। किञ्च अण्यन्तावस्थायां कर्ता कृष्णः चित्तवान् अस्ति। अतः शीधातुरपि चित्तवत्कर्तृकः अस्ति। ततः शीधातोः णिचि वृद्धौ आयादेशे शायी इति णिजन्तधातोः णिचश्च इत्यनेन कर्तृगामिनि क्रियाफले आत्मनेपदे प्राप्ते अणावकर्मकाच्चित्तवत्कर्तृकात् इति प्रकृतसूत्रेण केवलं परस्मैपदं विधीयते। तेन शाययति इत्येव रूपं भवति।

अधुना कर्तृगामिनि क्रियाफलेऽपि परस्मैपदे प्राप्ते तं बाधितुं सूत्रमिदमारभ्यते –

## [२६.२३] न पादम्याङ्यमाङ्यसपरिमुहरुचिनृतिवदवसः ॥ (१.३.८९)

**सूत्रार्थः** – पादम्याङ्यमाङ्यसपरिमुहरुचिनृतिवदवसः ण्यन्तात् परस्मैपदं न भवति।

**सूत्रव्याख्या** – निषेधसूत्रेऽस्मिन् पदद्वयमस्ति। न पादम्याङ्यमाङ्यसपरिमुहरुचिनृतिवदवसः (५/१) इति सूत्रगतपदच्छेदः। आङ्–पूर्वो यम आङ्यमः, आङ्–पूर्वो यस आङ्यसः, परिपूर्वो मुहः परिमुहः। पाश्च दमिश्च आङ्यमश्च आङ्यसश्च परिमुहश्च रुचिश्च नृतिश्च वदश्च वस् च तेषां समाहारद्वन्द्वे पादम्याङ्यमाङ्यसपरिमुहरुचिनृतिवदवस्, तस्मात् पादम्याङ्यमाङ्यसपरिमुहरुचिनृतिवदवसः। बुधयुधनशजनेङ्प्रुद्रुस्रुभ्यो णेः इत्यतः णेः इत्यस्य, शेषात् कर्तरि परस्मैपदम् इत्यतः परस्मैपदम् इत्यस्य च अनुवृत्तिर्भवति। एवञ्च पा, दम्, आङ्पूर्वकः यम्, आङ्पूर्वकः यस्, परिपूर्वकः यस्, परिपूर्वकः मुह्, रुच्, नृत्, वद्, वस् इत्येतेभ्यः धातुभ्यः ण्यन्तेभ्यः परस्मैपदं न भवति इति सूत्रार्थः।



पा पाने इति भ्वादिगणीयधातोः निगरणार्थः। अतः निगरणचलनार्थेभ्यश्च इत्येनन कर्तृगामिनि क्रियाफले परस्मैपदे प्राप्ते तन्निषेधार्थमिदं सूत्रम्।

**अत्र विशेषः** – णिचश्च इति योगेन कर्तृगामिनि क्रियाफले आत्मनेपदे सिद्धे तत्तद्विशेषावस्थायां बुधयुधनशजनेङ्प्रुद्रुस्रुभ्यो णेः, अणावकर्मकाच्चित्तवत्कर्तृकात् , निगरणचलनार्थेभ्यश्च इति सूत्रत्रयेण कर्तृगामिनि क्रियाफलेऽपि परस्मैपदं विहितम् इति इदं सूत्रत्रयं णिचश्च इति योगस्य अपवादभूतम्। अधुना प्रकृतसूत्रेण अणावकर्मकाच्चित्तवत्कर्तृकात् , निगरणचलनार्थेभ्यश्च इति सूत्रद्वयेन कर्तृगामिनि क्रियाफले प्राप्तस्य परस्मैपदस्य निषेधो विधीयते। इदानीमुच्यते– किं स निषेधः परगामिनि क्रियाफले प्राप्तस्य परस्मैपदस्य कृतेऽपि। तदा उच्यते– तत्र नायं निषेधः। केवलं कर्तृगामिनि क्रियाफले प्राप्तस्य परस्मैपदस्य एव निषेधः। स्वतः कर्तृगामिनि क्रियाफले आत्मनेपदं, परगामिनि च परस्मैपदं भवति एव इति असन्देहः। तेन पाययति वत्सान् पयः इत्यादिप्रयोगः साधु भवति।

**उदाहरणम्** – पाययते। दमयते। आयामयते। आयासयते। परिमोहयते। रोचयते। नर्तयते। वादयते। वासयते।

**सूत्रार्थसमन्वयः** –

१. **पाययते** – इत्यत्र भ्वादिगणीयः पा पाने इति धातुः अस्ति। तस्मात् णिचि शाच्छासाह्वाव्यावेपां युक् इत्यनेन युगागमे अनुबन्धलोपे पायि इति जायते। ततः निगरणार्थकत्वात् कर्तृगामिनि क्रियाफले णिचश्च इत्यनेन प्राप्तम् आत्मनेपदं निगरणचलनार्थेभ्यश्च इत्येनन बाधित्वा केवले परस्मैपदे प्राप्ते तस्य प्रकृतसूत्रेण निषेधे पाययते इति रूपं भवति।

२. **दमयते** – दमु उपशमे इति दिवादिगणीयधातोः णिचि उपधावृद्धौ दाम् इ इति जाते जनीजॄष्क्नसुरञ्जोऽमन्ताश्च इति गणसूत्रेण मिद्वद्भावे मितां ह्रस्वः इत्यनेन उपधाह्रस्वे दमि इति जायते। ततः णिचश्च इत्येनन प्राप्तम् आत्मनेपदं बाधित्वा अणावकर्मकाच्चित्तवत्कर्तृकात् इत्येनन केवले परस्मैपदे प्राप्ते प्रकृतसूत्रेण तस्य निषेधः। तेन दमयते इति रूपं सिध्यति।

३. **आयामयते** – आङ्–उपसर्गपूर्वकात् यम उपरमे इति भ्वादिगणीयधातोः णिचि उपधावृद्धौ आयामि इति जायते। ततः णिचश्च इत्येनन प्राप्तम् आत्मनेपदं बाधित्वा अणावकर्मकाच्चित्तवत्कर्तृकात् इत्येनन केवले परस्मैपदे प्राप्ते प्रकृतसूत्रेण तस्य निषेधः। तेन आयामयते इति रूपं जायते।

४. **आयासयते** – आङ्–उपसर्गपूर्वकात् यसु प्रयत्ने इति दिवादिगणीयधातोः णिचि उपधावृद्धौ आयासि इति जायते। ततः णिचश्च इत्येनन प्राप्तम् आत्मनेपदं बाधित्वा अणावकर्मकाच्चित्तवत्कर्तृकात् इत्येनन केवले परस्मैपदे प्राप्ते प्रकृतसूत्रेण तस्य निषेधः। तेन आयासयते इति रूपं जायते।

५. **परिमोहयते**– परि–उपसर्गपूर्वकात् मुह वैचित्ये इति दिवादिगणायधातोः णिचि लघूपधगुणे परिमोहि इति जायते। ततः णिचश्च इत्येनन प्राप्तम् आत्मनेपदं बाधित्वा



अणावकर्मकाच्चित्तवत्कर्तृकात् इत्येनन केवले परस्मैपदे प्राप्ते प्रकृतसूत्रेण तस्य निषेधः। तेन परिमोहयते इति रूपं जायते।

६. **रोचयते–** रुच दीप्तावभिप्रीतौ च इति भ्वादिगणीयधातोः णिचि लघूपधगुणे रोचि इति णिजन्तधातोः णिचश्च इत्येनन प्राप्तम् आत्मनेपदम् अणावकर्मकाच्चित्तवत्कर्तृकात् इत्येनन केवले परस्मैपदे प्राप्ते प्रकृतसूत्रेण तस्य निषेधः। तेन रोचयते इति रूपं जायते।

७. **नर्तयते–** नृती गात्रविक्षेपे इति दिवादिगणायधातोः णिचि लघूपधगुणे रोचि इति णिजन्तधातोः णिचश्च इत्येनन प्राप्तम् आत्मनेपदं बाधित्वा अणावकर्मकाच्चित्तवत्कर्तृकात् इत्येनन केवले परस्मैपदे प्राप्ते प्रकृतसूत्रेण तस्य निषेधः। तेन नर्तयते इति रूपं जायते।

८. **वादयते–** वद व्यक्तायां वाचि इति भ्वादिगणीयधातोः णिचि उपधावृद्धौ वादि इति णिजन्तधातोः णिचश्च इत्येनन प्राप्तम् आत्मनेपदं बाधित्वा अणावकर्मकाच्चित्तवत्कर्तृकात् इत्येनन केवले परस्मैपदे प्राप्ते प्रकृतसूत्रेण तस्य निषेधः। तेन वादयते इति रूपं जायते।

९. **वासयते–** वस निवासे इति वसगणीयधातोः णिचि उपधावृद्धौ वासि इति णिजन्तधातोः णिचश्च इत्येनन प्राप्तम् आत्मनेपदं बाधित्वा अणावकर्मकाच्चित्तवत्कर्तृकात् इत्येनन केवले परस्मैपदे प्राप्ते प्रकृतसूत्रेण तस्य निषेधः। तेन वासयते इति रूपं जायते।



## पाठगतप्रश्नाः-३

१७. निगरणचलनार्थेभ्यश्च इति सूत्रस्य कोऽर्थः।

१८. उपरमति इत्यत्र परस्मैपदविधायकसूत्रं किम्।

१९. व्याङ्परिभ्यो रमः इत्यस्य उदाहरणानि लिखत।

२०. प्राद्वहः इत्यनेन किं विधीयते परस्मैपदम् आत्मनेपदं वा।

२१. न पादम्याङ् इत्यादिसूत्रं पूरयत।

२२. अणावकर्मकाच्चित्तवत्कर्तृकात् इत्यस्य उदाहरणं किम्।



## पाठसारः

अनुदात्तेत्धातोः, ङित्धातोः च आत्मनेपदं भवति। पुनः स्वरितञितः कर्त्रभिप्राये क्रियाफले इत्येनन क्रियाफलस्य कर्तृगामित्वे आत्मनेपदं भवति , क्रियाफलस्य परगामित्वे तु परस्मैपदं भवति इत्युच्यते। किञ्च शेषात्कर्तरि परस्मैपदम् इत्यनेन आत्मनेपदनिमित्तहीनाद्धातोः कर्तरि परस्मैपदं स्यात् इति सामान्येन परस्मैपदात्मनेपदविधानमुक्त्वा ततः विशेषार्थं पाठोऽयमारब्धः इति ज्ञेयम्। क्रियाया विनिमयार्थे द्योत्ये आत्मनेपदं भवति व्यतिलुनीते इत्यादौ, क्वचिच्च तस्य निषेधः न गतिहिंसार्थेभ्यः



इत्यनेन, व्यतिगच्छन्ति इत्यादौ। क्वचित् उपसर्गयोगेन परस्मैपदिधातोरपि आत्मनेपदं भवति। कुत्रचित् स्वरितञितः कर्त्रभिप्राये क्रियाफले इत्यनेन परगामिनि क्रियाफले प्राप्तं परस्मैपदं बाधित्वा आत्मनेपदं विधीयते विक्रीणीते इत्यादौ। किञ्च सन्प्रत्ययात् पूर्वं यः आत्मनेपदी धातुः, तेन तुल्यं सन्नन्तधातोरपि आत्मनेपदं भवति। परगामिनि क्रियाफलेऽपि आत्मनेपदविधानं भवति तथा च सूत्रं– गन्धनावक्षेपणसेवनसाहसिक्यप्रतियत्नप्रकथनोपयोगेषु कृञः। कृधातुः ञित् अस्ति, अतः परगामिनि क्रियाफले परस्मैपदं प्राप्तमस्ति अत एव कर्तृगामिनि क्रियाफले परस्मैपदविधानार्थम् अनुपराभ्यां क्रियः इति सूत्रमारभ्यते। पुनः परस्मैपदप्रकरणे एको विशेषः ज्ञेयः यत् शेषात् कर्तरि परस्मैपदम् इत्यतः कर्तरि इत्यपि पदम् अनुवर्तते। तस्मात् परस्मैपदप्रकरणस्थसूत्रैः परस्मैपदविधानरूपो यो विशेष उच्यते स तु कर्तृवाच्ये भवति, तेन भावकर्मस्थले आत्मनेपदं भवति इति न संशयः इति सम्यक् अवधार्यताम्। तत्र कर्तृगामिनि क्रियाफलेऽपि परस्मैपदविधानार्थं बुधयुधनशजनेङ्प्रुद्रुस्रुभ्यो णेः, निगरणचलनार्थेभ्यश्च, अणावकर्मकाच्चित्तवत्कर्तृकात् इत्येतत्सूत्रत्रयमारब्धम्। पुनः तन्निषेधसूत्रमपि आरब्धम्, न पादम्याङ्यमाङ्यसपरिमुहरुचिनृतिवदवसः इति। एवं तत्र तत्र विशेषा ज्ञेयाः।

##  पाठान्तप्रश्नाः

१. गन्धनावक्षेपण इति सूत्रं प्रपूर्य व्याख्यात।

२. कर्तरि कर्मव्यतिहारे इति सूत्रं सोदाहरणं व्याख्यात।

३. विपराभ्यां जेः इति सूत्रं सोदाहरणं व्याख्यात।

४. पूर्ववत्सनः इति सूत्रं सोदाहरणं व्याख्यात।

५. दाणश्च सा चेच्चतुर्थ्यर्थे इति सूत्रं सोदाहरणं व्याख्यात।

६. अनुपराभ्यां कृञः इति सूत्रं सोदाहरणं व्याख्यात।

७. बुधयुधनशजनेङ्प्रुद्रुस्रुभ्यो णेः इति सूत्रं सोदाहरणं व्याख्यात।

८. अभिप्रत्यतिभ्यः क्षिपः इति सूत्रं सोदाहरणं व्याख्यात।

९. न पादम्याङ् इत्यादिसूत्रं प्रपूर्य व्याख्यात।

१०. अणावकर्मकाच्चित्तवत्कर्तृकात् इति सूत्रं सोदाहरणं व्याख्यात।

##  पाठगतप्रश्नोत्तराणि

**उत्तराणि–१**

१. क्रियाविनिमयः।

२. भवति। सन्तिष्ठते।

३. विजयेत। पराजयते।



४. अनुदात्तङित आत्मनेपदम् ।

५. न गतिहिंसार्थेभ्य इति निषेधात्।

६. निविशते।

७. विक्रीणीते।

८. अन्यस्य योग्यछेदनक्रियाम् अन्यः करोति इत्यर्थः।

**उत्तराणि–२**

९. शतम् अपलपति।

१०. अपलापेऽर्थे।

११. रथेन सञ्चरते।

१२. गन्धनावक्षेपणसेवनसाहसिक्यप्रतियत्नप्रकथनोपयोगेषु कृञः।

१३. सूचयति।

१४. सन्प्रत्ययात् पूर्वं यः आत्मनेपदी धातुः तेन तुल्यं सन्नन्तधातोरपि आत्मनेपदं भवति।

१५. प्रकथयति।

१६. दाणश्च सा चेच्चतुर्थ्यर्थे।

**उत्तराणि–३**

१७. भक्षणार्थकेभ्यः चलनार्थकेभ्यः च ण्यन्तेभ्यो धातुभ्यः कर्तृगामिनि क्रियाफलेपि परस्मैपदं भवति।

१८. विभाषाकर्मकात्।

१९. विरमति । आरमति। परिरमति।

२०. परस्मैपदम् ।

२१. न पादम्याङ्यमाङ्यसपरिमुहरुचिनृतिवदवसः।

२२. शेते कृष्णः, तं गोपी शाययति।

## ॥ इति षड्विंशः पाठः ॥



२७

# भावकर्मप्रकरणम्

## प्रस्तावना

संस्कृते तु कर्तृवाच्यं कर्मवाच्यं भाववाच्यं चेति वाच्यत्रयमस्ति। क्रियया यदा प्राधान्येन कर्ता वाच्यो भवति तदा कर्तृवाच्यं भवति। अत्र तु कर्तरि प्रथमाविभक्तिः भवति, कर्त्रनुसारं क्रियायां वचनपुरुषा भवन्ति यथा रामः पठति, तौ विद्यालयं गच्छतः इत्यादिवाक्येषु कर्त्रनुसारं वचनपुरुषाः सन्ति। यदा च क्रियया प्राधान्येन कर्म वाच्यं भवति तदा कर्मवाच्यं भवति। अत्र तु कर्मानुसारं क्रियायां वचनपुरुषा भवन्ति, किञ्च कर्मणि प्रथमाविभक्तिः कर्तरि च तृतीयाविभक्तिः भवति। तद्यथा–रामेण पुस्तकं पठ्यते, ताभ्यां विद्यालयः गम्यते इत्यादिवाक्येषु कर्मानुसारं वचनपुरुषाः सन्ति। अकर्मकधातुस्थले तु क्रियाया एव प्राधान्यं भवति न तु कर्तुः इति हेतोः तद्भाववाच्यमित्युच्यते। अत्र तु कर्तरि तृतीयाविभक्तिः भवति, क्रियायां तु प्रथपुरुषैकवचनमात्रमेव भवति। लः कर्मणि च भावे चाकर्मकेभ्यः इति सूत्रे कर्ता, कर्म, भावः च इति लकारार्थत्रयमुक्तमस्ति। सकर्मकेभ्यः अकर्मकेभ्यश्च धातुभ्यः कर्तरि लकारा भवन्ति इति भवन्तः पूर्वं ज्ञातवन्तः। अधुना सकर्मकेभ्यः धातुभ्यः कर्मणि अकर्मकेभ्यश्च धातुभ्यः भावे लकारा भवन्ति इति प्रदर्शयितुं प्रकरणमिदमारभ्यते। अत इदं प्रकरणं भावकर्मप्रक्रिया इत्यच्युते। भाववाच्ये केवलं प्रथमपुरुषः एकवचनं च भवति किन्तु यदा धातुः सकर्मकतां लभते तदा कर्मवाच्ये सर्वे पुरुषाः सर्वाणि च वचनानि भवन्ति इत्येतत् सर्वम् अग्रे स्पष्टं भविष्यति।

(कर्तृवाच्यम् कर्मवाच्यम् प्रेष्टार्थप्रतिपादनाय इत्यादिशब्दाः व्याकरणेन व्युत्पादयितुं न शक्याः। सम्प्रति प्रादेशिकभाषासु अस्य बहुलप्रयोगः वर्तते। अतः तथा प्रकटितम्। परन्तु कर्तरि प्रयोगः – कर्तृवाच्यम्, कर्णणि प्रयोगः – कर्मवाच्यम् इति व्यवहारः भवति। यथासम्भवम् कर्तृवाच्यादिपदानां व्यवहारः वरम्।)



## उद्देश्यानि

इमं पाठं पठित्वा भवान् –

- भावपदार्थं ज्ञास्यति स च कस्यार्थो भवति इत्यपि ज्ञास्यति।
- भाववाच्यं कर्मवाच्यं च किं भवतीति ज्ञास्यति।
- भाववाच्यकर्मवाच्ययोः को विशेष इति ज्ञास्यति।
- तत्तत्स्थलेषु विशेषसूत्राणां कार्यं ज्ञास्यति।
- भूधातोः भावे प्रत्येकं लकारस्य रूपं ज्ञास्यति।
- सर्वोपरि भावे कर्मणि च प्रयोगपरिवर्तनं कर्तुं प्रभवेत्।



**भाववाच्ये कर्मवाच्ये च धातुभ्यः परस्मैपदात्मनेपदयोः कतरत् पदं भवति इति दर्शयितुं विधिसूत्रमिदमारभ्यते-**

## [२७.१] भावकर्मणोः॥ (१.३.१३)

**सूत्रार्थः** – लस्य आत्मनेपदं भवति।

**सूत्रव्याख्या** – विधिसूत्रमिदम् एकपदात्मकमस्ति। लः कर्मणि च भावे चाकर्मकेभ्यः इत्यतः लः इति, अनुदात्तङित आत्मनेपदम् इत्यतः आत्मनेपदम् इति पदमनुवर्तते। भावः च कर्म च तयोः इतरेतरयोगद्वन्द्वे भावकर्मणी, तयोः भावकर्मणोः इति सप्तमीद्विवचनान्तम्। एवञ्च भावार्थे कर्मार्थे च धातोः विहितस्य लकारस्य स्थाने आत्मनेपदप्रत्ययो भवति इति सूत्रार्थः। एवञ्च भाववाच्ये कर्मवाच्ये च आत्मनेपदमेव भवति, परस्मैपदं तु कदापि न भवति। तत्र धातुः आत्मनेपदी परस्मैपदी उभयपदी वा भवतु भाववाच्ये कर्मवाच्ये च आत्मनेपदमेव भवति इति निश्चप्रचम्।

**अत्र विशेषः** – फलं व्यापारश्चेति धातोः अर्थद्वयं भवति। तत्र व्यापारो नाम क्रिया भावो वा। व्यापाराश्रयः कर्ता, फलाश्रयः च कर्म भवति। यदा कर्तरि एव फलव्यापारौ निहितौ भवतः तदा स धातुः अकर्मक इत्युच्यते। यथा देवदत्तः एधते इत्यत्र एध वृद्धौ इति धातुः अकर्मकोऽस्ति। अत्र वृद्धिरूपफलस्य तज्जनकक्रियायाः च आश्रयः देवदत्तः एव। अतः अयं धातुः अकर्मक इत्युच्यते। अत्र प्रश्नः – यदि धातोरेव अर्थः भावो भवति तदा लः कर्मणि च भावे चाकर्मकेभ्यः इत्यनेन किमर्थं भावार्थे लकारो भवति इति कथ्यते। तथा प्रश्ने सति उद्यते – भावः धातोरेव अर्थः किन्तु भावार्थकलकारेण केवलम् सोऽर्थः अनूद्यते न तु तदर्थस्य विधानं भवति। तर्हि एतावता स्पष्टं यत् यदा कर्म न भवति तदैव भाववाच्यं (impersonal voice) भवति। सकर्मकस्थले तु कर्मवाच्यं (passive voice) भवति। भावे लकारे सति कर्तृरूपेण युष्मद्–शब्देन अस्मद्–शब्देन सह वा सामान्याधिकरण्यं न भवति इति हेतोः केवलः प्रथमपुरुष एव भवति। मध्यमपुरुषार्थं युष्मद्शब्देन सह सामानाधिकरण्यमावश्यकम्, उत्तमपुरुषार्थम् अस्मद्–शब्देन सह सामानाधिकरण्यमावश्यकम्। भाववाच्ये तु ताभ्यां द्वाभ्यां सामानाधिकरण्यं न सम्भवति तस्मात् मध्यमोत्तमपुरुषौ न भवतः। फलतः केवलः प्रथमपुरुष एव भवति।

यथा आस्यते त्वया, आस्यते मया।

अनयोः वाक्ययोः भावस्यैव प्राधान्यं भवति। स च भावः तिङ्वाच्यः एव, न तु युष्मदर्थः, अस्मदर्थो वा भवति। अतः नैव सामानाधिकरण्यमस्ति। तिङ्वाच्यभावो द्रव्यरूपो नास्ति। अतः द्वित्वादिप्रतीतिः नैव भवति। तस्मात् द्विवचनादिः नैव भवति किन्तु उत्सर्गतः एकवचनमेव भवति, एकवचनमुत्सर्गतः करिष्यते इति भाष्यवचनात्। द्वित्वादेः प्रतीतिः द्रव्ये एव सम्भवति यत्र लिङ्गसंख्याभ्यामन्वयो न भवति तत् अद्रव्यमित्युच्यते। एवञ्च भावस्य अद्रव्यरूपत्वात् द्वित्वादिसंख्या प्रतीता न भवति इति हेतोः उत्सर्गतः एकवचनं भवति। यतः संख्याया अविवक्षायामपि पदसाधुत्वार्थं सुप्तिङ्प्रत्यययोः यः कश्चित् स्यादेव। यतो हि नियमोऽस्ति अपदं न प्रयुञ्जीत। भावार्थे लकारे सति भाव उक्तो भवति कर्ता च अनुक्तो भवति, अतः अनभिहिते कर्तरि कर्तृकरणयोस्तृतीया इत्यनेन तृतीयाविभक्तिर्भवति– त्वया मया अन्यैर्वा भूयते इत्यादौ।



**उदाहरणम्** – भूयते। एतस्य प्रक्रिया अग्रे स्पष्टा भविष्यति।

पूर्वं भ्वादिप्रकरणेषु भवन्तः दृष्टवन्तः यत् तत्र तत्र शप्–श्यन्–श्लुः इत्यादिविकरणानि भवन्ति। किन्तु तत् कर्तृवाच्ये एव भवति। यथा कर्तरि शप् इत्यनेन विधीयमानं शप्–विकरणं कर्तरि एव भवति। तर्हि कर्मवाच्ये भाववाच्ये च कीदृशं विकरणं भवति इति पृच्छायाम् नूतनविकरणं प्रदर्शयितुं सूत्रमिदमारभ्यते–

## [२७.२] सार्वधातुके यक्॥ (३.१.६७)

**सूत्रार्थः** – धातोः यक् भावकर्मवाचिनि सार्वधातुके।

**सूत्रव्याख्या** – विधिसूत्रमिदं पदद्वयात्मकस्ति। सार्वधातुके (७/१), यक् (१/१) इति सूत्रगतपदच्छेदः। चिण्भावकर्मणोः इत्यतः भावकर्मणोः इति पदस्य, धातोरेकाचो हलादेः संश्च इत्यतः धातोः इति पदस्य च अनुवृत्तिर्भवति, प्रत्ययः परश्च इत्युभयमधिक्रियते। एवञ्च भावार्थे कर्मार्थे च सार्वधातुके प्रत्यये परतः धातोः यक्प्रत्ययो भवति इति सूत्रार्थः। यकः ककारः इत्संज्ञकः। अतः य इत्येव शिष्यते।

**अत्र विशेषः**– यकः कित्त्वस्य फलत्रयमस्ति।

१. सार्वधातुकार्धधातुकयोः इति गुणनिषेधः यथा भूयते इत्यत्र।
२. अपरं सम्प्रसारणम्। यथा– यजति इत्यस्य भावे इज्यते इति रूपम्। अत्र वचिस्वपियजादीनां किति इति सम्प्रसारणं भवति।
३. यकः कित्करणात् आद्यन्तौ टकितौ इति परिभाषया अन्त्यावयवो भवति।

**उदाहरणम्** – भूयते।

**सूत्रार्थसमन्वयः** – भूधातोः भावार्थे वर्तमानक्रियावृत्तित्वविवक्षायां वर्तमाने लट् इति लट्लकारे तत्स्थाने भावकर्मणोः इत्यनेन आत्मनेपदं विहितम्। तत्र भावेऽर्थे औत्सर्गिकम् एकवचनं भवति इति हेतोः तप्रत्यये भू त इति स्थिते तिङ्शित्सार्वधातुकम् इत्यनेन तप्रत्ययस्य सार्वधातुकसंज्ञायां सार्वधातुके यक् इति प्रकृतसूत्रेण यक् भवति। यतो हि अत्र भावार्थः सार्वधातुकप्रत्ययश्च अस्ति। यकः कित्त्वात् आद्यन्तौ टकितौ इति परिभाषया अन्त्यावयवे भू य त इति जाते सार्वधातुकार्धधातुकयोः इत्यनेन गुणे प्राप्ते क्ङिति च इति गुणनिषेधे त इत्यत्रत्यस्य अकारस्य अचोऽन्त्यादि टि इत्यनेन टिसंज्ञायां टित आत्मनेपदानां टेरे इत्यनेन एत्त्वे भूयते इति रूपं सिध्यति।

भूधातोः भावे लुटि तादेशे यगपवादभूते तास्प्रत्यये भू तास् त इति स्थिते अग्रिमसूत्रमारभ्यते–

## [२७.३] स्यसिच्सीयुट्तासिषु भावकर्मणोरुपदेशेऽज्झनग्रहदृशां वा चिण्वदिट् च॥ (६.४.६२)

**सूत्रार्थः** – उपदेशे योऽच् तदन्तानां हनादीनां च चिणीव अङ्गकार्यं वा स्यात् स्यादिषु भावकर्मणोर्गम्यमानयोः, स्यादीनामिडागमश्च।



**सूत्रव्याख्या** – अस्मिन् विधिसूत्रे अष्टौ पदानि सन्ति। स्यसिच्सीयुट्तासिषु (७/३), भावकर्मणोः (७/२), उपदेशे (७/१), अज्झनग्रहदृशां (६/३), वा (अव्ययम्), चिण्वत् (अव्ययम्), इट् (१/१) च (अव्ययम्) इति सूत्रगतपदच्छेदः। स्यश्च सिच्च सीयुट् च तासिश्च तेषामितरेतरयोगद्वन्द्वे स्यसिच्सीयुट्तासयः, तेषु स्यसिच्सीयुट्तासिषु। भावश्च कर्म च तयोः इतरेतरयोगद्वन्द्वे भावकर्मणी, भावकर्मणी तयोर्भावकर्मणोः। अच्च हनश्च ग्रहश्च दृश्च तेषामितरेतरयोगद्वन्द्वे अज्झनग्रहदृशस्तेषामज्झनग्रहदृशाम्। अङ्गस्य इत्यधिक्रियते। उपदेशे इत्यंशस्य अच् इत्यंशेन सह सम्बन्धः। अधिकृतस्य अङ्गस्य विशेषणं भवति अच् इति। अतः येन विधिस्तदन्तस्य इत्यनेन तदन्तविधौ उपदेशे योऽच् तदन्तानाम् अङ्गानामित्यर्थो भवति। तच्च अङ्गं धातुरेव भवति। एवञ्च सूत्रार्थस्तावत्– भावकर्मणोः विषये स्य–सिच्–सीयुट्–तास् इत्येतेषु परेषु सत्सु उपदेशे यो धातुः अच् तदन्तस्य धातोः स्थाने तथा हन्–ग्रह्–दृश्धातूनां स्थाने चिण्वत् अङ्गकार्यं विकल्पेन भवति किञ्च स्यादीनाम् इडागमो भवति।

**उदाहरणम्** – भाविता, भविता।

**सूत्रार्थसमन्वयः** – तथा च भूधातोः लुटि तप्रत्यये तासि भू तास् त इति जाते भूधातोः उपदेशे अजन्तत्वात् किञ्च अस्मात् भूधातोः उत्तरस्य तासः विद्यमानत्वात् प्रकृतसूत्रेण चिण्वद्भावे इडागमे च भू इतास् त इति जायते। ततः चिण्वद्भावात् अचो ञ्णिति इत्यनेन ऊकारस्य वृद्धौ औकारे आवादेशे भाव् इतास् त इति जाते तप्रत्ययस्य स्थाने डादेशे डित्त्वात् अभस्यापि टेः लोपे भाविता इति रूपं सिध्यति। चिण्वद्भावाभावपक्षे इडागमाभावपक्षे च तासः आर्धधातुकत्वात् आर्धधातुकस्येड्वलादेः इत्यनेन तासः वलादिलक्षणे इडागमे सार्वधातुकार्धधातुकयोः इत्यनेन भू इत्यस्य ऊकारस्य गुणे अवादेशे भव् इतास् ति इति जाते लुटः प्रथमस्य डारौरसः इत्यनेन तिपः स्थाने डादेशे अनुबन्धलोपे भवितास् इत्यत्र आस् इत्यस्य टिसंज्ञा भवति। ततः डित्त्वविधानसामर्थ्यात् अभस्यापि टेः लोपो भवति इति हेतोः आसः लोपे भविता इति रूपं जायते इति रूपद्वयं सिध्यति।

चिणि परे सति यानि कार्याणि भवन्ति तानि तावत्–

- अचो ञ्णिति, अत उपधाया चेति सूत्राभ्यां वृद्धिः।
- आतो युक् चिण्कृतोः इत्यनेन युगागमः।
- हो हन्तेर्ञ्णिन्नेषु इति योगेन हनः कुत्वम्।
- चिण्णमुलोर्दीर्घोऽन्यतरस्याम् इत्यनेन उपधाया वैकल्पिको वृद्धिः।

**विशेषः** – सूत्रेऽस्मिन् गृहीता धातवः – अजन्तधातुः, हन्, ग्रह्, दृश् च। सूत्रस्यास्य प्रवृत्तौ निमित्तानि– स्य, सिच्, सीयुट्, तासि। सूत्रस्य कार्यम्–चिण्वद्भावः, इडागमश्च। यस्मिन्पक्षे चिण्वद्भावः तस्मिन्पक्षे एव इडागमो भवति। चिण्वद्भावस्याभिप्रायः– प्रायः चत्वारि अङ्गकार्याणि चिणि परे सति भवन्ति–

I. वृद्धिः – अचो ञ्णिति अथवा अत उपधायाः इति णिन्निमित्तकवृद्धिः। स स्यादिषु परेष्वपि भवति। यथा– भू इट् स्य ते–भौ इ स्य ते –भाविष्यते। ग्रह् इट् स्य ते – ग्राहिष्यते।



II. युगागमः – आतो युक् चिण्कृतोः इति आदन्तधातोः युगागमो भवति। स स्यादिष्वपि भवति। यथा– दा इट् स्य ते–दा युक् इट् स्यते–दायिष्यते।

III. हन्तेर्घत्वम् – हो हन्तेर्ञ्णिन्नेषु इति हन्धातोः हकारस्य घकारो भवति । तच्च स्यादिष्वपि भवति। यथा– हन् इट् स्य ते–घन् इ स्य ते– घान् इ स्य ते–घानिष्यते।

IV. दीर्घः–चिण्णमुलोर्दीर्घोऽन्यतरस्याम् इति मित्–अङ्गस्य वैकल्पिको दीर्घो भवति। तच्च स्यादिष्वपि भवति। यथा–शम् इ स्यते–शामिष्यते/शमिष्यते। चिण्वद्भावप्रयोजनविषये शालिनीछन्दोनिर्मितो महाभाष्यस्थः रमणीयः श्लोकः–

चिण्वद्वृद्धिर्युक् च हन्तेश्च घत्वं दीर्घश्चोक्तो यो मितां वा चिणीति।

इट् चासिद्धस्तेन मे लुप्यते णिर्नित्यश्चायं वल्निमित्तो विघाती।।

(महाभाष्यम्-६.४.६२)

उदाहरणानि अग्रिमसूत्रेषु दर्शयिष्यन्ते।

भूधातोः भावे लुङि च्लौ अडागमे तप्रत्यये अभू च्लि त इति स्थिते च्लेः सिच् इति सिचि प्राप्ते सूत्रमिदमारभ्यते–

## [२७.४] चिण्भावकर्मणोः॥ (३.१.६६)

**सूत्रार्थः –** च्लेः चिण् स्यात् भावकर्मवाचिनि तशब्दे परे।

**सूत्रव्याख्या –** विधिसूत्रमिदं पदद्वयात्मकमस्ति। चिण् (१/१), भावकर्मणोः (७/२) इति सूत्रगतपदच्छेदः। भावः च कर्म च तयोः इतरेतरयोगद्वन्द्वे भावकर्मणी, तयोर्भावकर्मणोः। च्लेः सिच् इत्यतः च्लेः इत्यनुवर्तते। चिण् ते पदः इत्यस्मात् ते इत्यस्यानुवृत्तिर्भवति। भावकर्मवाचिनि तशब्दे परे च्लेः स्थाने चिण्–आदेशो भवति इति सूत्रार्थः। चिणः णित्करणं वृद्ध्यर्थम्।

**उदाहरणम् –** अभावि त्वया मया अन्यैश्च इति भावे अर्थे उदाहरणम्।

**सूत्रार्थसमन्वयः –** अत्र भूधातोः भावेऽर्थे लुङि अ भू त इति स्थिते च्लि लुङि इत्यनेन च्लिप्रत्यये ततः च्लेः स्थाने च्लेः सिच् इत्यनेन सिचि प्राप्ते तं बाधित्वा प्रकृतसूत्रेण चिण्–आदेशो विधीयते। ततः चिणः णित्करणात् अचो ञ्णिति इत्यनेन वृद्धौ अ भाव् इत इति जाते चिणो लुक् इत्यनेन तप्रत्ययस्य लुकि अभावि इति रूपं सिध्यति।

सम्प्रति भूधातोः भाववाच्ये प्रत्येकं लकारेषु रूपाणि कथं भवन्ति इति सवाक्यम् अधः प्रदर्श्यते –

| | |
|---|---|
| लट् | भूयते त्वया मया अन्यैश्च । |
| लिट् | बभूवे त्वया मया अन्यैश्च। |
| लुट् | भाविता, भविता त्वया मया अन्यैश्च। |
| लृट् | भाविष्यते, भविष्यते त्वया मया अन्यैश्च। |



| | |
|---|---|
| लोट् | भूयताम् त्वया मया अन्यैश्च। |
| लङ् | अभूयत त्वया मया अन्यैश्च। |
| विधिलिङ् | भूयेत त्वया मया अन्यैश्च। |
| आशीर्लिङ् | भाविषीष्ट, भविषीष्ट त्वया मया अन्यैश्च। |
| लुङ् | अभावि त्वया मया अन्यैश्च। |
| लृङ् | अभाविष्यत, अभविष्यत त्वया मया अन्यैश्च। |

**अत्र ध्येयम्** – अकर्मकधातुः कदाचित् उपसर्गवशात् सकर्मको भवति। यथा भूधातुः अकर्मकः किन्तु अनु इत्युपसर्गयोगेन अनुभवार्थः प्रतीयते। यथा देवदत्तः आनन्दम् अनुभवति इत्यत्र अनुपूर्वकभूधातुः सकर्मकतां लभते। अतः अस्य वाक्यस्य कर्मवाच्ये प्रयोगपरिवर्तनं क्रियते चेत् देवदत्तेन आनन्दः अनुभूयते इति प्रयोगो भविष्यति। अतः देवदत्तेन आनन्दः **अनुभूयते** इत्यत्र अनुभूयते इति **कर्मार्थे** उदाहरणम्। अत्र कर्मणि लकारः। तस्मात् कर्म तिङा उक्तमिति हेतोः आनन्दः इत्यत्र नैव कर्मणि द्वितीयाविभक्तिः, अपि तु प्रातिपदिकार्थलिङ्गपरिमाणवचनमात्रे प्रथमा इत्यनेन प्रातिपदिकार्थे प्रथमाविभक्तिः। कर्म उक्तमस्ति इति हेतोः अन्येषां सर्वेषामनुक्तत्वात् कर्ता अनुक्तो भवति। तस्मादेव कर्तृकरणयोस्तृतीया इत्यनेन अनुक्तकर्तरि तृतीया विभक्तिर्जायते अतः देवदत्तेन इत्यत्र तृतीयाविभक्तिः। भाववाच्ये प्रथमपुरुषैकवचनमात्रम् भवति किन्तु सकर्मकस्थले कर्मवाच्ये सर्वे पुरुषाः सर्वाणि च वचनानि भवन्ति इति सम्यक् स्मर्तव्यम्। किञ्च कर्मणो वचनानुसारं तङि वचनं भवति, अतः अनुभूयते इत्यत्र एकवचनं भवति। एतदतिरिक्तानि उदाहरणानि अत्र प्रदर्श्यन्ते तान् च प्रयोगान् कृपया पश्यत–

- प्रथमपुरुषः कर्ता–चैत्रेण चैत्रमैत्राभ्याम् चैत्रमैत्रगौपालैः आनन्दः अनुभूयते, आनन्दौ अनुभूयेते, आनन्दा अनुभूयन्ते।
- मध्यमपुरुषः कर्ता–त्वया युवाभ्याम् युष्माभिः आनन्दः अनुभूयते, आनन्दौ अनुभूयेते, आनन्दा अनुभूयन्ते।
- उत्तमपुरुषः कर्ता–मया आवाभ्याम् अस्माभिः आनन्दः अनुभूयते, आनन्दौ अनुभूयेते, आनन्दा अनुभूयन्ते।

किञ्च युष्मदर्थः यदि कर्म भवति तदा युष्मदर्थस्य क्रियायाम् मध्यमपुरुषो भवति–

- प्रथमपुरुषः कर्ता–चैत्रेण चैत्रमैत्राभ्याम् चैत्रमैत्रगौपालैः त्वम् अनुभूयसे, युवाम् अनुभूयेथे, यूयम् अनुभूयध्वे।
- उत्तमपुरुषः कर्ता–मया आवाभ्याम् अस्माभिः त्वम् अनुभूयसे, युवाम् अनुभूयेथे, यूयम् अनुभूयध्वे।

यदि अस्मदर्थः कर्म भवति तदास्मदर्थस्य क्रियायाम् उत्तमपुरुषो भवति–



- प्रथमपुरुषः कर्ता– चैत्रेण चैत्रमैत्राभ्याम् चैत्रमैत्रगौपालैः अहम् अनुभूये, आवाम् अनुभूयावहे, वयम् अनुभूयामहे।
- मध्यमपुरुषः कर्ता– त्वया युवाभ्याम् युष्माभिः अहम् अनुभूये, आवाम् अनुभूयावहे, वयम् अनुभूयामहे। एवम् अन्यत्रापि चिन्त्यताम्।

##  पाठगतप्रश्नाः-१

२३. अकर्मकेभ्यो धातुभ्यः कस्मिन्नर्थे लकारो भवति।

२४. सकर्मकेभ्यो धातुभ्यः कस्मिन्नर्थे लकारो भवति।

२५. भावे कर्मणि च को लकारो भवति।

२६. भावकर्मणोः आत्मनेपदविधायकसूत्रं किम्।

२७. चिण्भावकर्मणोः इति सूत्रार्थं लिखत।

२८. भूधातोः भावे लुङि च किं रूपम्।

२९. चिणि परे सति कति अङ्गकार्याणि भवन्ति।

३०. भावे सर्वे वचनपुरुषाः भवन्ति। किमिदंसाधु असाधु वा।

३१. कर्मणि सर्वे वचनपुरुषाः भवन्ति। किमिदं साधु असाधु वा।

३२. भावे कीदृशा वचनपुरुषाः भवन्ति।

३३. अनुभूयते इति किं सकर्मकः।

३४. स्यसिच्-आदिसूत्रं पूरयत।

---

लभ्धातोः लुङि प्रथमपुरुषैकचने च्लेः चिण्–आदेशे अलभ् इ त इति स्थिते सूत्रमिदमारभ्यते –

## [२७.५] विभाषा चिण्णमुलोः॥ (७.१.६९)

**सूत्रार्थः** – लभेः नुमागमो वा स्यात् चिण्णमुलोः परयोः।

**सूत्रव्याख्या** – विधिसूत्रमिदं पदद्वयात्मकमस्ति। विभाषा (१/१), चिण्णमुलोः (७/२) इति सूत्रगतपदच्छेदः। चिण् च णमुल् च तयोरितरेतरयोगद्वन्द्वे चिण्णमुलौ, तयोः चिण्णमुलोः। लभेश्च इत्यतः लभेः इत्यस्य किञ्च इदितो नुम् धातोः इत्यस्मात् नुम् इत्यस्य चानुवृत्तिर्भवति। एवञ्च चिणि परतः अथवा णमुलि परतः लभ्धातोः विकल्पेन नुम्–आगमो भवति इति सूत्रार्थः।



**विशेषः–** सूत्रेऽस्मिन् व्यवस्थितविभाषा आश्रीयते। अतः उपसर्गरहितात् धातोः विकल्पेन नुमागमो भवति। सोपसर्गलभ्धातोः तु नित्यमेव नुमागमो भवति। अतः उपालम्भि इति रूपं भवति न तु उपालाभि।

**उदाहरणम्** – अलम्भि, अलाभि।

**सूत्रार्थसमन्वयः –** तथा च लभ्धातोः लुङि तप्रत्यये चिणि अलभ् इ त इति जायते। तत्र च चिण् परोऽस्ति इति हेतोः प्रकृतसूत्रेण विकल्पेन नुमागमो भवति। ततः नकारस्य अनुस्वारे अनुस्वारस्य च परसवर्णे चिणो लुक् इत्यनेन तप्रत्ययस्य लुकि अलम्भि इति रूपं सिध्यति। यदा तु न नुम् तदा चिणः णित्त्वात् उपधावृद्धौ अलाभि इति रूपं सिध्यति।

भञ्ज आमर्दने इति धातोः कर्मवाच्ये लुङि प्रथमपुरुषैकवचनविवक्षायां तप्रत्यये यकि च्लेः चिणि अभन्ज् इ त इति स्थिते सूत्रमिदमारभ्यते–

## [२७.६] भञ्जेश्चिणि ॥ (६.४.३३)

**सूत्रार्थः –** भञ्जेः चिणि नलोपो वा स्यात्।

**सूत्रव्याख्या –** सूत्रमिदं पदद्वयात्मकमस्ति। भञ्जेः (६/१), चिणि (७/१) इति सूत्रगतपदच्छेदः। श्नान्नलोपः इत्यतः नलोपः इति पदस्यानुवृत्तिर्भवति। अपि च जान्तनशां विभाषा इत्यतः विभाषा इत्यस्यानुवृत्तिर्भवति। तथा च चिणि परतः भन्ज्–धातोः नकारस्य विकल्पेन लोपो भवति इति सूत्रार्थः।

**उदाहरणम्** – अभाजि, अभञ्जि।

**सूत्रार्थसमन्वयः –** अत्र भन्ज्–धातोः लुङि अभन्ज् इत इति स्थिते प्रकृतसूत्रेण नकारस्य लोपो भवति। यतो हि अत्र भन्ज्धातोः परं चिणप्रत्ययोऽस्ति। ततः अत उपधायाः इत्यनेन उपधावृद्धौ अभाज् इत इति जाते चिणो लुक् इत्यनेन तकारस्य लोपे अभाजि इति सिद्धं भवति। यदा तु नकारस्य लोपो न भवति तदा उपधायाम् अकारो न भवति तस्मात् वृद्धिरपि न भवति अतः अभञ्जि इति रूपमपि सिध्यति।

तनु विस्तारे इति सकर्मकधातोः कर्मणि लटि तादेशे यक्–विकरणे तन् य त इति स्थिते सूत्रमिदमारभ्यते –

## [२७.७] तनोतेर्यकि॥ (६.४.४४)

**सूत्रार्थः –** तनोतेः आकारः अन्तादेशो वा स्यात् यकि।

**सूत्रव्याख्या –** विधिसूत्रमिदं पदद्वयात्मकमस्ति। तनोतेः (६/१), यकि (७/१) इति सूत्रगतपतच्छेदः। विड्वनोरनुनासिकस्यात् इत्यतः आत् इत्यस्यानुवृत्तिर्भवति। ये विभाषा इत्यस्मात् विभाषा इत्यस्य च अनुवृत्तिर्भवति। ततः तन्धातोः स्थाने विकल्पेन आकारः अन्तादेशो भवति यकि परतः इति सूत्रार्थः। अलोन्त्यस्य इति परिभाषया (अन्त्यस्य) नकारस्यैव अयमादेशो भवति।



**उदाहरणम्** – तायते, तन्यते।

**सूत्रार्थसमन्वयः** – एवञ्च तन् य त इति स्थिते प्रकृतसूत्रेण नकारस्य स्थाने आकारादेशो भवति। यतो हि अत्र तनः यक् विहितोऽस्ति। ततः सवर्णदीर्घे च तायत इति जाते टेः एत्त्वे तायते इति रूपं सिध्यति। आत्त्वाभावदशायां तु तन्यते इति रूपं भवति इति रूपद्वयं सिध्यति।

तप्धातोः लुङि प्रथमपुरुषैकवचने च्लौ अ तप् च्लि त इति स्थिते चिण्भावकर्मणोः इत्यनेन च्लेः चिणि प्राप्ते सूत्रमिदमारभ्यते –

## [२७.८] तपोऽनुतापे च॥ (३.१.६५)

**सूत्रार्थः** – तपः च्लेः चिण् न स्यात् कर्मकर्तरि अनुतापे च।

**सूत्रव्याख्या** – विधिसूत्रमिदं पदत्रयात्मकमस्ति। तपः (५/१), अनुतापे (७/१) च इति सूत्रगतपदच्छेदः। च्लेः सिच् इत्यतः च्लेः इत्यस्य, चिण् ते पदः इत्यतः चिण् इत्यस्य, न रुधः इत्यतः न इत्यस्य, अचः कर्मकर्तरि इत्यतः कर्मकर्तरि इत्यस्य चानुवृत्तिर्भवति। एवञ्च तप्धातोः उत्तरस्य च्लेः स्थाने चिण्–आदेशो न भवति कर्मकर्तरि अनुतापे चार्थे।

**अत्र विशेषः** – कर्मकर्तुः उदाहरणं काशिकायाम् अथवा वैयाकरणसिद्धान्तकौमुद्याः कर्मकर्तृप्रकरणे पश्यत। अत्र तु प्रकरणवशात् भावकर्मप्रक्रियायाम् अनुतापेऽर्थे उदाहरणं प्रदर्श्यते।

**उदाहरणम्** – अन्वतप्त पापेन।

**सूत्रार्थसमन्वयः** – अत्र भावे अथवा कर्मणि अनु–उपसर्गपूर्वकात् तप्धातोः लुङि च्लौ तप्रत्यये अनु अ तप् च्लि त इति दशायाम् अनुतापार्थस्य सत्त्वात् प्रकृतसूत्रेण चिण्–निषेधो भवति। ततः च्लेः सिच् इत्यनेन सिजादेशे अनुबन्धलोपे अनु अ तप् स् त इति जाते झलो झलि इत्यनेन सकारस्य लोपे इको यणचि इत्यनेन यणि वकारे अन्वतप्त इति रूपं सिध्यति। यदा तु अनुतापार्थो न भवति तदा चिण् भवत्येव यथा उदतापि सुवर्णं सुवर्णकारेण।

शम्धातोः लुङि प्रथमपुरुषैकवचने अ शम् इ त इति स्थिते उपधावृद्धौ प्राप्तायां सूत्रमिदमारभ्यते–

## [२७.९] नोदात्तोपदेशस्य मान्तस्यानाचमेः॥ (७.३.३४)

**सूत्रार्थः** – उपदेशावस्थायाम् उदात्तमकारान्तधातोः उपधायाः वृद्धिः न भवति चिणि ञिति णिति कृति च परतः, आपूर्वकचम्धातुं विहाय।

**सूत्रव्याख्या** – विधिसूत्रेऽस्मिन् चत्वारि पदानि सन्ति। न (अव्ययम्), उदात्तोपदेशस्य (६/१), मान्तस्य (६/१), अनाचमेः (६/१) इति सूत्रगतपदच्छेदः। उदात्त उपदेशो यस्य स उदात्तोपदेशः, बहुव्रीहिः। मोऽन्ते यस्य स मान्तः तस्य मान्तस्य, बहुव्रीहिः। न आचमिः अनाचमिः तस्य अनाचमेः। मृजेर्वृद्धिः इत्यतः वृद्धिः इत्यस्य, अत उपधायाः इत्यतः उपधायाः, अचो ञ्णिति इत्यतः



ञ्णिति इत्यस्य, आतो युक् चिण्कृतोः इत्यतः चिण्कृतोः इत्यस्य च अनुवृत्तिर्भवति। तेन पूर्वोक्तसूत्रार्थः सिध्यति।

**उदाहरणम्** – अशमि।

**सूत्रार्थसमन्वयः** – एवञ्च शम्धातोः लुङि तप्रत्यये च्लौ च्लेः स्थाने सिचि सिचः स्थाने चिण्भावकर्मणोः इति प्रकृतसूत्रेण चिणादेशे अ शम् इ त इति स्थिते उपधावृद्धौ प्राप्तायां प्रकृतसूत्रेण अत्र वृद्धेर्निषेधो भवति। यतो हि अत्र शम् इति मान्तात् परं चिण् अस्ति। ततः चिणो लुक् इत्यनेन चिणो लुकि सति अशमि इति रूपं सिध्यति। एवमेव अदमि इत्यादि सिध्यति।

दाधातुः अनिट् अस्ति। अतः वलादिलक्षणस्य इटः निषेधः प्राप्तः। किन्तु उपदेशावस्थायाम् अजन्तत्वात् स्यसिच्सीयुडादिसूत्रेण पाक्षिके चिण्वदिटि सति सूत्रमिदं प्रवर्तते–

## [२७.१०] आतो युक्चिण्कृतोः॥ (७.३.३३)

**सूत्रार्थः** – आदन्तानां युगागमः स्यात् चिणि ञिति कृति च।

**सूत्रव्याख्या** – विधिसूत्रमिदं पदत्रयात्मकमस्ति। आतः (६/१), युक् (१/१), चिण्कतोः (७/२) इति सूत्रगतपदच्छेदः। अङ्गस्य इत्यधिक्रियते। आतः इत्यङ्गस्य विशेषणमस्ति । विशेषणत्वात् तदन्तविधौ आदन्तात् अङ्गात् इत्यर्थो भवति। चिण् च कृत् च तयोरितरेतरयोगद्वन्द्वे चिण्कृतौ, तयोः चिण्कृतोः। अचो ञ्णिति इत्यतः ञ्णिति इत्यस्यानुवृत्तिर्भवति। ञ्णिति इत्यस्य चिण्कृतोः इत्यत्रत्यकृदंशेन सह सम्बन्धः। युगागमस्य कित्त्वात् आद्यन्तौ टकितौ इति परिभाषया अन्त्यावयवो भवति। एवञ्च सूत्रस्यार्थः – आदन्ताङ्गस्य युगागमो भवति चिणि परे अथवा ञित्णितोः कृत्प्रत्यययोः परयोः। युकः ककारः इत्संज्ञकः, उकार उच्चारणार्थः। अतः य्–मात्रमेव शिष्यते इति ध्येयम्।

**उदाहरणम्** – दायिता,दाता।

**सूत्रार्थसमन्वयः** – प्रसङ्गवशात् चिण उदाहरणमेवात्र प्रस्तूयते। शिष्टयोरुदाहरणं कृदन्तप्रकरणे प्राप्यते। दाधातोः भावकर्मणोः लुटि प्रथमपुरुषैकवचने तप्रत्यये तासि स्यसिच्सीयुडादिसूत्रेण पाक्षिके चिण्वदिटि दा इतास् त इति स्थिते तासः चिण्वद्भावत्वात् चिण् परमेवास्ति। किञ्च दा इति आदन्तम् अङ्गमपि अस्ति। अतः प्रकृतसूत्रेण युगागमे लुटः स्थाने डादेशे टिलोपे च दाय् इ त् आ इति जाते सर्ववर्णसम्मेलने च दायिता इति रूपं सिध्यति, चिण्वदिडभावे दाता इति रूपं सिध्यति इति आहत्य रूपद्वयं सिध्यति।

ण्यन्तात् शम्–धातोः हेतुमण्णिचि लुटि तप्रत्यये तासि शमि इ तास् त इति जायते। ततः अयं धातुः णिजन्तः अस्ति इति हेतोः धातोः अजन्तत्वात् चिण्वद्भावे इटि च शम् इ इ इतास् त इति जाते णेरनिटि इति सूत्रेण प्रथमद्वितीययोः उभयोः णिचोः लोपे शम् इ तास् त इति जाते सूत्रमिदमारब्धम्–

## [२७.११] चिण्णमुलोर्दीर्घोऽन्यतरस्याम्॥ (६.४.९३)

**सूत्रार्थः** – चिण्परे णमुल्परे च णौ मितामुपधाया दीर्घो वा स्यात्।



**सूत्रव्याख्या** – विधिसूत्रेऽस्मिन् पदत्रयमस्ति। चिण्णमुलोः (७/२), दीर्घः (१/१), अन्यतरस्याम् (सप्तमीविभक्तिप्रतिरूपकमव्ययम्) इति सूत्रगतपदच्छेदः। चिण् च णमुल् च तयोरितरेतरयोगद्वन्द्वे चिण्णमुलौ तयोः चिण्णमुलोः। दोषो णौ इत्यतः णौ इत्यस्य, ऊदुपधायाः गोहः इत्यस्मात् उपधायाः इत्यस्य, मितां ह्रस्वः इत्यतः मिताम् इत्यस्य चानुवृत्तिर्भवति। तथा च सूत्रार्थः– चिण्परके णमुल्परके च णिचि परतः मित्संज्ञकधातोः उपधाया विकल्पेन दीर्घः स्यात्।

**उदाहरणम्** – शामिता, शमिता, शमयिता।

**सूत्रार्थसमन्वयः** – एवञ्च शम् इ तास् त इति जाते उपधाभूतस्य अकारस्य चिण्णमुलोर्दीर्घोऽन्यतरस्यामिति योगेन विकल्पेन दीर्घे शाम् इ तास् त इति जाते तप्रत्ययस्य डादेशे डित्त्वसामर्थ्यात् अभस्यापि टेः आसः लोपे शामिता इति रूपं सिध्यति, दीर्घाभावपक्षे शमिता इति रूपं सिध्यति। किञ्च चिण्वद्भावो विकल्पेन भवतीति हेतोः यदा चिण्वद्भावो न भवति तदा णेः इकारस्य गुणे एकारे तस्य अयादेशे सर्ववर्णसम्मेलने च शमयिता इति रूपं सिध्यति इति आहत्य रूपत्रयं भवति।

## द्विकर्मकधातुस्थले प्रयोगपरिवर्तनप्रकारः।

लः कर्मणि च भावे चाकर्मकेभ्यः इति सूत्रेण कर्मणि लकारो भवति इति भवन्तः पूर्वं ज्ञातवन्तः। किन्तु तत्र प्रश्न उदेति यत् द्विकर्मकधातुस्थले अर्थात् यस्मिन् धातौ कर्मद्वयं भवति, तयोः कस्मिन् कर्मणि लकारो भवति इति। तदुत्तराय वयं कारकप्रकरणस्थसूत्राणि पश्यामः। तत्र अकथितञ्च इत्यनेन अपादानादिकारकैः अविवक्षितस्य कारकस्य कर्मसंज्ञा भवति। तत् अप्रधानं, गौणं वा कर्म इत्युच्यते। कर्तुरीप्सिततमं कर्म इत्यादिसूत्रेण यस्य कर्मसंज्ञा विधीयते, तत् प्रधानं मुख्यं वा कर्म इत्युच्यते इति कर्मणो भेदद्वयं सम्यक् जानीत। तत्र मुख्ये कर्मणि लकारो भवति अथवा गौणे कर्मणि लकारो भवति इति पृच्छायाम् उच्यते–

गौणे कर्मणि दुह्यादेः प्रधाने नीहृकृष्वहाम्। इति

दुह्– याच्–पच्–दण्ड्–रुध्–प्रच्छ्–चि–ब्रू–शास्–जि–मथ्–मुष्धातुभ्यः द्वादशभ्यः गौणे कर्मणि लकारो भवति। नी–हृ–कृष्–वह्धातुभ्यः चतुर्भ्यः प्रधाने कर्मणि प्रत्ययो भवति।

यथा– गां दोग्धि पयः गोपः इति कर्तृवाच्यस्य कर्मवाच्ये परिवर्तनं क्रियते चेत्– गौः दुह्यते पयः गोपेन इति वाक्यं भवति। अत्र दुह्–धातुः द्विकर्मकोऽस्ति। पयः इति प्रधानं कर्म तस्य च कर्मसंज्ञा कर्तुरीप्सिततमं कर्म इत्येनन भवति, गाम् इत्यप्रधानं कर्म तस्य च कर्मसंज्ञा अकथितं च इत्यनेन। पूर्वोक्तश्लोकानुसारम् अत्र अप्रधाने कर्मणि लकारो भवति। अप्रधाने कर्मणि लकारो भवति इति हेतोः अप्रधानं कर्म एव उक्तं भवति। प्रधानं च कर्म पयः इति तच्च अनुक्तम्। यतो हि तत्र लकारो विहितो नास्ति। कर्मणि द्वितीया इत्येनन तु अनुक्तकर्मणि द्वितीया विभक्तिः भवति न तु उक्तकर्मणि। अतः पयः इत्यत्र द्वितीयाविभक्तिः, पयः इति प्रथमान्तमस्ति इति चिन्तयित्वा भ्रान्तो मा भव।





भवतां सौकर्याय अधः स्तम्भनिर्माणेन उदाहरणानि आलोच्यन्ते। आदौ अकथितं च इति सूत्रस्थदुह्यादिधातूनाम् उदाहरणानि प्रदर्श्यन्ते–

| कर्तरि प्रयोगः | कर्मणि प्रयोगः | अप्रधानं कर्म | प्रधानं कर्म |
|---|---|---|---|
| गां दोग्धि पयः | गौः दुह्यते पयः | गौः | पयः |
| बलिं याचते वसुधाम् | बलिः याच्यते वसुधाम् | बलिः | वसुधा |
| अविनीतं विनयं याचते | अविनीतो विनयं याच्यते | अविनीतः | विनयः |
| तण्डुलान् ओदनं पचति | तण्डुलाः ओदनं पच्यन्ते | तण्डुलाः | ओदनः |
| गर्गान् शतं दण्डयति | गर्गाः शतं दण्ड्यन्ते | गर्गाः | शतम् |
| व्रजम् अवरुणद्धि गाम् | व्रजः अवरुध्यन्ते गाम् | व्रजः | गौः |
| माणवकं पन्थानं पृच्छति | माणवकः पन्थानं पृच्छयते | माणवकः | पन्थाः |
| वृक्षम् अवचिनोति फलानि | वृक्षः अवचीयते फलानि | वृक्षः | फलानि |
| माणवकं धर्मं ब्रूते | माणवको धर्मं उच्यते | माणवकः | धर्मः |
| माणवकं धर्मं शास्ति | माणवको धर्मं शिष्यते | माणवकः | धर्मः |
| शतं जयति देवदत्तम् | शतं जीयते देवदत्तः | देवदत्तः | शतम् |
| सुधां क्षीरनिधिं मथ्नाति | सुधां क्षीरनिधिः मथ्यते | क्षीरनिधिः | सुधा |
| देवदत्तं शतं मुष्णाति | देवदत्तः शतं मुष्यते | देवदत्तः | शतम् |

अधुना नी–आदिधातूनाम् उदाहरणानि प्रदर्श्यन्ते–

| कर्तृवाच्यम् | कर्मवाच्यम् | अप्रधानं कर्म | प्रधानं कर्म |
|---|---|---|---|
| अजां ग्रामं नयति | अजा ग्रामं नीयते | अजा | ग्रामः |
| अजां ग्रामं हरति | अजा ग्रामं ह्रियते | अजा | ग्रामः |
| अजां ग्रामं कर्षति | अजा ग्रामं कृष्यते | अजा | ग्रामः |
| अजां ग्रामं वहति | अजा ग्रामं उह्यते | अजा | ग्रामः |

ततः–

बुद्धिभक्षार्थयोः शब्दकर्मकाणां निजेच्छया।।

प्रयोज्यकर्मण्यन्येषां ण्यन्तानां लादयो मताः।

गतिबुद्धिप्रत्यवसानार्थशब्दकर्माकर्मकाणामणि कर्ता स णौ इत्येनन येषां कर्मसंज्ञा भवति तेषु बुद्ध्यर्थकधातोः भक्षणार्थकधातोः शब्दकर्मकधातोः च वक्ता स्वेच्छानुसारं प्रधाने अप्रधाने वा कर्मणि



लकारं विधातुं शक्नोति। अर्थात् तत्र प्रागुक्तादिनियमो नास्ति। गत्यर्थकादिधातूनां कृते तु यस्य कर्मसंज्ञा भवति तादृशकर्मणि प्रयोज्यकर्मणि च लकारादिप्रत्ययो भवति। बोध्यते माणवकं धर्मः माणवको धर्ममिति वा इति वाक्ये प्रधानं कर्म धर्मः, अप्रधानं च माणवकः। अतः तत्र स्वेच्छानुसारं कर्मणि लकारो भवति इति हेतोः प्रधानकर्मणि लकारो भवति चेत् उक्तप्रधानकर्मणि प्रथमां विधाय गुरुणा बोध्यते माणवकं धर्मः इति वाक्यं भवति। यदा तु अप्रधानकर्मणि लकारो भवति तदा उक्तप्रधानकर्मणि प्रथमां विधाय गुरुणा माणवको धर्मं बोध्यते इति वाक्यं भवति। अनुक्तकर्मणि द्वितीया भवति कर्मणि द्वितीया इत्येनन योगेन इति तु भवन्तो जानन्ति एव इति एतावता बुद्ध्यर्थकधातोरुदाहरणमालोचितम्। मात्रा भोज्यते माणवकम् ओदनः, माणवक ओदनं वा भोज्यते इति प्रत्यवसानार्थकस्य उदाहरणम्।

यज्ञदत्तेन देवदत्तो ग्रामं गम्यते। अत्र प्रयोज्यकर्म देवदत्तः। प्रयोज्यकर्मण्यन्येषां ण्यन्तानां लादयो मताः इत्यनेन प्रयोज्यकर्मणि एव लकारो भवति, येन प्रयोज्यकर्मणः देवदत्तादेः उक्तत्वात् प्रथमाविभक्तिः भवति। तेन देवदत्तो ग्रामं गम्यते इत्यादिवाक्यं सिध्यति। प्रयोज्यकर्मणः भिन्नात् ईप्सिततमकर्मणः ग्रामशब्दात् तु द्वितीया भवत्येव। गम्यते इत्यत्र हेतुमण्णिजन्तगम्धातोः प्रयोज्यकर्मणि लकारो भवति।

केषाञ्चित् धातूनां कर्मवाच्ये भाववाच्ये च लटि प्रथमपुरुषैकवचने रूपाणि अधः प्रदर्श्यन्ते येन भवन्तः तानि रूपाणि व्यवहर्तुं शक्नुयुः।

| मूलधातुः | कर्तृवाच्यम् | भावकर्मरूपम् | अर्थः (हिन्दीभाषया) |
|---|---|---|---|
| अर्च् | अर्चति | अर्च्यते | (किसी से) पूजा जाता है। |
| अस् | अस्ति | भूयते | हुआ जाता है। |
| आप् | आप्नोति | आप्यते | पाया जाता है। |
| इङ् | अधीते | अधीयते | पढा जाता है। |
| इष् | इच्छति | इष्यते | चाहा जाता है। |
| कथ् | कथयति | कथ्यते | कहा जाता है। |
| कृ | करोति | क्रियते | किया जाता है। |
| कृष् | कर्षति | कृष्यते | जोता जाता है। |
| क्री | क्रीणाति | क्रीयते | खरीदा जाता है। |
| क्षिप् | क्षिपति | क्षिप्यते | फेंका जाता है। |
| खाद् | खादति | खाद्यते | खाया जाता है। |
| गण् | गणयति | गण्यते | गिना जाता है। |
| गम् | गच्छति | गम्यते | जाया जाता है। |



| | | | |
|---|---|---|---|
| गै | गायति | गीयते | गाया जाता है। |
| ग्रह् | गृह्णाति | गृह्यते | ग्रहण किया जाता है। |
| चिन्त् | चिन्तयति | चिन्त्यते | सोचा जाता है। |
| चुर् | चोरयति | चोर्यते | चुराया जाता है। |
| ज्ञा | जानाति | ज्ञायते | जाना जाता है। |
| तॄ | तरति | तीर्यते | पार किया जाता है। |
| त्यज् | त्यजति | त्यज्यते | छोडा जाता है। |
| दह् | दहति | दह्यते | जलाया जाता है। |
| दा | ददाति | दीयते | दिया जाता है। |
| दुह् | दोग्धि | दुह्यते | दुहा जाता है। |
| दृश् | पश्यति | दृश्यते | देखा जाता है। |
| ध्यै | ध्यायति | ध्यायते | ध्यान किया जाता है। |
| नम् | नमति | नम्यते | नमस्कार किया जाता है। |
| नी | नयति | नीयते | ले जाया जाता है। |
| पच् | पचति | पच्यते | पकाया जाता है। |
| पठ् | पठति | पठ्यते | पढा जाता है। |
| पा | पिबति | पीयते | पिया जाता है। |
| पाल् | पालयति | पाल्यते | पाला जाता है। |
| पूज् | पूजयति | पूज्यते | पूजा किया जाता है। |
| प्रच्छ् | पृच्छति | पृच्छ्यते | पूछा जाता है। |
| बन्ध् | बध्नाति | बध्यते | बाँधा जाता है। |
| ब्रू | ब्रवीति | उच्यते | कहा जाता है। |
| भाष् | भाषते | भाष्यते | कहा जाता है। |
| याच् | याचते | याच्यते | माँगा जाता है। |

विवक्षातः कारकाणि भवन्ति। अतः किमपि वाक्यं कर्तृवाच्ये कर्मवाच्ये भाववाच्ये वा वक्ता प्रयोक्तुं पारयति। अधः तस्मिन् वाच्यत्रये केषांञ्चित् वाक्यानां प्रयोगः प्रदर्श्यते–



| कर्तृवाच्यम् | भाववाच्यम् |
|---|---|
| सः भवति। | तेन भूयते। |
| त्वं भवसि। | त्वया भूयते। |
| अहं भवामि। | मया भूयते। |
| प्रसिद्धः पुरुषो भवेत्। | प्रसिद्धेन पुरुषेण भूयेत। |
| | |
| **कर्तृवाच्यम्** | **कर्मवाच्यम्** |
| रामः विद्यालयं गच्छति। | रामेण विद्यालयः गम्यते। |
| रामः ओदनं खादति। | रामेण ओदनः खाद्यते। |
| त्वं घटं कुरु। | त्वया घटः क्रियताम्। |
| त्वं पुस्तकं पठ। | त्वया पुस्तकं पठ्यताम्। |
| अहं जलं न पास्यामि। | मया जलं न पास्यते। |
| बालाः पुष्पाणि चिन्वन्ति। | बालैः पुष्पाणि चीयन्ते। |
| भवान् ग्रामं गच्छतु। | भवता ग्रामः गम्यताम्। |
| यूयं कार्यम् अकार्ष्ट। | युष्माभिः कार्यम् अकारि। |
| ते देवान् यजेयुः। | तैः देवाः इज्येरन्। |
| वयं युवां द्रक्ष्यामः। | अस्माभिः युवां द्रक्ष्येथे। |
| आवां युष्मान् रक्षेव। | आवाभ्यां यूयं रक्षेध्वम्। |
| त्वं मां परिचिनु | त्वया अहं परिचीयै। |
| भवन्तः आवाम् अजानन्। | भवद्भिः आवाम् अज्ञायावहि। |
| तौ अस्मान् अस्तौष्टाम्। | ताभ्यां वयम् अस्ताविष्महि। |



## पाठगतप्रश्नाः-२

३५. विभाषा चिण्णमुलोः इति सूत्रस्य कोऽर्थः।

३६. णिजन्तस्य शम्धातोः लुटि प्रथमपुरुषैकवचने कति रूपाणि भवन्ति कानि च तानि।



३७. आतो युक्चिण्कृतोः इत्यनेन किं विधीयते।

३८. दाधातोः लुटि प्रथमपुरुषैकवचने कति रूपाणि भवन्ति कानि च तानि।

३९. नोदात्तोपदेशस्य मान्तस्यानाचामेः इत्यनेन किं क्रियते।

४०. तपोऽनुतापे च इत्यस्योदाहरणं किम्।

४१. तन्धातोः कर्मणि लटि प्रथमपुरुषैकवचने कति रूपाणि भवन्ति कानि च तानि।

४२. भञ्ज् धातोः कर्मणि लुङि प्रथमपुरुषैकवचने कति रूपाणि कानि च तानि।



## पाठसारः

लः कर्मणि च भावे चाकर्मकेभ्यः इत्यनेन कर्ता, कर्म,भावश्चेति लकारार्थाः त्रय इत्युक्तम्। अत्र तु विशेषो यत् अकर्मकेभ्यो धातुभ्यः कर्तरि भावे लकारा भवन्ति। सकर्मकेभ्यस्तु कर्तरि कर्मणि च। भावः क्रिया, व्यापारः, भावना, उत्पादना इति पर्यायशब्दाः। वस्तुतः भावः धातोरेव अर्थः अतः लकारेण अनुवादमात्रं क्रियते। भावः अमूर्तपदार्थः। अतः तस्मिन् लिङ्गसंख्यान्वयो न भवति इति हेतोः पदसाधुत्वार्थमेव एकवचनमुत्सर्गतः करिष्यते इति न्यायेन प्रथपुरुषैकवचनान्तं रूपमेव प्रत्यकं लकारे भवति इति सम्यक् अवधार्यताम्। कर्मणि लकारे तु सर्वे पुरुषाः सर्वाणि च वचनानि भवन्ति इत्येतावान् विशेषः। उपान्ते च द्विकर्मकधातुविषये चर्चा विहिता। द्विकर्मकधातुस्थले कथं वाच्यपरिवर्तनं भवति, एतद्विषये बहूनि उदाहरणानि प्रदर्शितानि सन्ति। द्विकर्मकधातुस्थले कथं वाच्यपरिवर्तनं भवति इत्यपि सोदाहरणं प्रदर्शिता। किञ्च अन्ते अनेकेषां वाक्यानां भावे कर्मणि वा वाच्यपरिवर्तनं दर्शितमस्ति। तानि अभ्यसनीयानि।



## पाठान्तप्रश्नाः

१. भावकर्मणोः इति सूत्रं व्याख्यात।

२. भावे लकारे कीदृशा वचनपुरुषा भवन्ति इति व्याख्यात।

३. कर्मणि लकारे कीदृशा वचनपुरुषा भवन्ति इति व्याख्यात।

४. चिण्णमुलोर्दीर्घोऽन्यतरस्याम् इति सूत्रं सोदाहरणं व्याख्यात।

५. भूयते इति रूपं साधयत।

६. स्यसिच्सीयुट्–आदिसूत्रं प्रपूर्य व्याख्यात।

७. भावार्थकलकारतः कर्मार्थकलकारतः विशेषः क इति विव्रियताम्।

८. भूयते इत्यत्र किमर्थं प्रथमपुरुषैकवचनमेव भवति इति स्पष्टीक्रियताम्।





## पाठगतप्रश्नोत्तराणि

**उत्तराणि–१**

१. भावे कर्तरि च।

२. कर्मणि कर्तरि च।

३. आत्मनेपदम्।

४. भावकर्मणोः।

५. भावकर्मवाचिनि तशब्दे परे च्लेः स्थाने चिण्–आदेशो भवति।

६. अभावि।

७. चत्वारि।

८. असाधु।

९. साधु।

१०. प्रथमपुरुषैकवचनमेव भवति।

११. आम्, सकर्मकः।

१२. स्यासिच्सीयुट्तासिषु भावकर्मणोरुपदेशेऽज्झनग्रहदृशां वा चिण्वदिट् च।

**उत्तराणि-२**

१३. चिणि परे सति अथवा णमुलि परे सति लभ्धातोः विकल्पेन नुम्–आगमो भवति।

१४. रूपत्रयम्। शामिता, शमिता, शमयिता।

१५. युगागमो भवति।

१६. रूपद्वयम्। दाता, दायिता।

१७. उपधावृद्धिनिषेधः।

१८. अन्वतप्त पापेन।

१९. रूपद्वयम्। तायते, तन्यते।

२०. रूपद्वयम्। अभाजि, अभञ्जि।

## ॥ इति सप्तविंशः पाठः॥



२८

# अथ अपत्याधिकारप्रकरणम्

## प्रस्तावना

तद्धिताः इत्यधिकारे ये प्रत्ययाः समायान्ति, तस्य प्रत्ययस्य तद्धित इति नाम्ना प्रख्यातं भवति। एवञ्च हितभवादिविविधेषु अर्थेषु तद्धितप्रत्ययाः प्रयुज्यन्ते। इदानीम् अपत्यार्थे विद्यमानानां तद्धितप्रत्ययानां विवरणं कुर्मः। अत एव अपत्याधिकारप्रकरणम् इति नाम अस्य प्रकरणस्य। अस्मिन् प्रकरणे न केवलं अपत्यार्थे प्रत्ययाः विधीयन्ते अपि तु हितभवाद्यर्थे अपि प्रत्ययाः भवन्ति। अस्मिन् प्रकरणे अधिकतया अपत्यार्थे तद्धितप्रत्ययानां विधानात् अपत्याधिकारप्रकरणम् इति नाम। अत्र तद्धिताः, समर्थानां प्रथमाद्वा, प्रत्ययः, परश्च इति एते अधिकाराः प्रत्ययविधायके सूत्रे आगच्छन्ति। अपत्यार्थे विद्यमानस्य तद्धितप्रत्ययस्य उदाहरणं हि गर्गस्य अपत्यं पुमान् इति लौकिकविग्रहे अपत्यार्थे यञ्प्रत्यये प्रक्रियाकार्ये गार्ग्यः इति रूपम्। एवञ्च पुंसु भवः इति लौकिकविग्रहे अपत्यभिन्ने भवार्थे स्नञ्प्रत्यये कृते प्रक्रियाकार्ये पौंस्नः इति रूपम्। अपत्यार्थे विहिताः अण्, अञ्, इञ्, ठक्, फक् इति एते प्रत्ययाः तद्धिताः इति अधिकारे पतन्ति। पुनश्च अपत्ये अर्थे प्रत्ययाः भवन्ति इति हेतोः अपत्यार्थकाः प्रत्ययाः इति वदन्ति।



## उद्देश्यानि

इमं पाठं पठित्वा भवान् -

- अपत्यार्थे विद्यमानान् प्रत्ययान् ज्ञातुं शक्यो भविष्यति।
- अपत्यार्थभिन्ने भवहिताद्यर्थे अपि विद्यमानान् प्रत्ययान् ज्ञातुं शक्यो भविष्यति।
- अपत्याधिकारे विद्यमानानि सूत्राणि ज्ञातुं शक्यो भविष्यति।
- लौकिकविग्रहम् अलौकिकविग्रहञ्च ज्ञातुं योग्यो भविष्यति।
- अपत्याधिकारे विद्यमानानां सूत्राणाम् उदाहरणानि ज्ञातुं प्रभवेत्।
- तद्धितप्रत्ययस्य प्रयोगविषयकं ज्ञातुं शक्नुयात्।
- अनुवृत्तिमाध्यमेन कथं सूत्रार्थः भवति इति तु स्पष्टं ज्ञानं प्राप्तुं शक्नुयात्।

### [२८.१] स्त्रीपुंसाभ्यां नञ्स्नञौ भवनात्॥ (४.१.८७)

**सूत्रार्थः** - धान्यानां भवने क्षेत्रे खञ् इत्यतः प्राग् अर्थेषु स्त्रीपुंसाभ्यां क्रमाद् तद्धितसंज्ञकौ नञ्स्नञौ प्रत्ययौ स्याताम् इति सूत्रस्य सामान्यार्थः।



**सूत्रव्याख्या** -अधिकारसूत्रम् इदम् अस्ति। अस्मिन् सूत्रे त्रीणि पदानि सन्ति। स्त्री च पुमान् च स्त्रीपुंसौ, ताभ्यां स्त्रीपुंसाभ्याम् इति इतरेतरद्वन्द्वः। स्त्रीपुंसाभ्याम् इति पञ्चमीद्विवचने रूपम्। नञ् च स्नञ् च इति नञ्स्नञौ इति इतरेतरद्वन्द्वः। स्त्रीपुंसाभ्याम् इति प्रथमाद्विवचनान्तं पदम्। भवनात् इति पञ्चम्येकवचनान्तं पदम्।

प्राग्दीव्यतोऽण् इत्यस्मात् प्राग् इति अनुवर्तते। प्रत्ययः, परश्च, ङ्याप्प्रातिपदिकात्, तद्धिताः, समर्थानां प्रथमाद्वा इति एते अधिकाराः आगच्छन्ति। एतत् अधिकारसूत्रम् अस्ति। अतः भवनात् इति पदं तु अवधित्वेन स्वीक्रियते। अतः सूत्रार्थो भवति - धान्यानां भवने क्षेत्रे खञ् इत्यतः प्राग् अर्थेषु स्त्रीपुंसाभ्यां क्रमाद् तद्धितसंज्ञकौ नञ्स्नञौ प्रत्ययौ स्याताम् इति सूत्रस्य सामान्यार्थः।

**उदाहरणम्**- स्त्रीषु भवः, स्त्रिया अपत्यम्, स्त्रीणां समूहः, स्त्रीभ्य आगतः, स्त्रीभ्यो हितः इति लौकिकविग्रहे स्त्री ङस् इति अलौकिकविग्रहः। तत्र भवहितापत्यादिषु अर्थेषु स्त्रीपुंसाभ्यां नञ्स्नञौ भवनात् इति अधिकारसूत्रेण तस्यापत्यम् इत्यादिना तत्तत्सूत्रेण नञ्प्रत्यये अनुबन्धलोपे स्त्री ङस् न इति स्थितिः भवति। अयं समुदायः तद्धितान्तः। अतः कृत्तद्धितसमासाश्च इति सूत्रेण प्रातिपदिकसंज्ञा भवति। ततः सुपो धातुप्रातिपदिकयोः इति सूत्रेण सुपः लोपे स्त्री न इति स्थितिः भवति। ततः तद्धितेष्वचामादेः इति सूत्रेण स्त्रीशब्दस्य आदेः अचः ईकारस्य वृद्धौ ऐकारे स्त्रै न भवति। एतदनन्तरम् अट्कुप्वाङ्नुम्व्यवायेऽपि इति सूत्रेण णत्वं भवति। ततः एकदेशविकृतमनन्यवत् इति सूत्रेण प्रातिपदिकसंज्ञा अस्ति। ततः विभक्तिकार्ये स्त्रैणः इति रूपम्।

एवमेव पुंसोऽपत्यम्, पुंसु भवः, पुंसां समूहः, पुंभ्यः आगतः, पुम्भ्यो हितः इति विग्रहे भवहितापत्यादिषु अर्थेषु स्त्रीपुंसाभ्यां नञ्स्नञौ भवनात् इति अधिकारसूत्रेण तस्यापत्यम् इत्यादिना तत्तत्सूत्रेण स्नञ्प्रत्यये पुंस् ङस् स्न भवति। स्नञ्प्रत्ययः तद्धितान्तत्वात् प्रातिपदिकसंज्ञा भवति। ततः सुब्लोपे आदिवृद्धौ च पौंस् स्न इति स्थितिः। ततः स्वादिष्वसर्वनामस्थाने इति सूत्रेण पदसंज्ञा भवति। ततः संयोगान्तस्य लोपः इति पदान्तस्य सकारस्य लोपे पौं स्न इति स्थितिः। ततः विभक्तिकार्ये निमित्तापाये नैमित्तिकस्याप्यपायः इति परिभाषया अनुस्वारस्य मकारः भवति। ततः नश्चापदान्तस्य झलि इति सूत्रेण पुनः मकारस्य अनुस्वारे विभक्तिकार्ये पौंस्नः इति रूपम्।

## [२८.२] तस्याऽपत्यम्॥ (४.१.९२)

**सूत्रार्थः** - षष्ठ्यन्तात् कृतसन्धेः समर्थादपत्येऽर्थे उक्ता वक्ष्यमाणाश्च प्रत्यया वा स्युः।

**सूत्रव्याख्या** - विधिसूत्रम् इदम् अस्ति। अस्मिन् सूत्रे पदद्वयम् अस्ति। तस्य इति पञ्चम्यन्तं पदम्। तस्य इत्यत्र षष्ठ्यन्तात् तच्छब्दात् पञ्चमी आगता। तस्याः पञ्चम्याः सूत्रत्वात् अदर्शनं भवति। अपत्यम् इति सप्तम्यन्तं पदम्। अत्रापि अपत्यम् इति शब्दात् सप्तमी आगता। तस्याः अपि सप्तम्याः सूत्रवशात् अदर्शनं भवति। अर्थात् सूत्रे विभक्तीनाम् अदर्शनं विपरिणामश्च जायेते। अतः प्रकृतसूत्रे सौत्रत्वात् पञ्चम्याः सप्तम्याः च लुक् इति इतरग्रन्थेषु।

तद्धितोत्पत्तिः सुबन्तात् भवति। अतः समर्थः पदविधिः इति परिभाषया समर्थात् इति पदम् उपलभ्यते। प्राग्दीव्यतोऽण् इत्यस्मात् अण् इति अनुवर्तते। प्रत्ययः, परश्च, ङ्याप्प्रातिपदिकात्, तद्धिताः,



समर्थानां प्रथमाद्वा इति एते अधिकाराः आगच्छन्ति। पुनश्च प्रकृतसूत्रे तस्य, अपत्यम् इति पदं स्वरूपबोधकम् नास्ति। अपि तु अर्थबोधकम् अस्ति। अतः सूत्रार्थो भवति - षष्ठ्यन्तात् कृतसन्धेः समर्थादपत्येऽर्थे उक्ता वक्ष्यमाणाश्च प्रत्यया वा स्युः।

**उदाहरणम्** - उपगोः अपत्यम् इति लौकिकविग्रहः। उपगु ङस् इति अलौकिकविग्रहः। तस्यापत्यम् इति सूत्रेण अपत्यार्थे प्राग्दीव्यतोऽण् इति सूत्रेण अण्-प्रत्ययः विधीयते। अनुबन्धलोपे कृते उपगु ङस् अ इति स्थितिः जायते। अयं समुदायः तद्धितान्तः। अतः तस्य प्रातिपदिकसंज्ञा भवति। सुब्लोपे उपगु अ इति स्थिते तद्धितेष्वचामादेः इति सूत्रेण आदिवृद्धिः भवति। तदा औपगु+अ इति स्थितिः भवति। तदा -

## [२८.३] ओर्गुणः॥ (६.४.१४६)

**सूत्रार्थः** - उवर्णान्तस्य भस्य अङ्गस्य गुणः स्यात् तद्धिते परे।

**सूत्रव्याख्या** - विधिसूत्रम् इदम् अस्ति। अस्मिन् सूत्रे पदद्वयम् अस्ति। ओः इति षष्ठ्यन्तं पदम्। गुणः इति प्रथमान्तं पदम्।

भस्य, अङ्गस्य इति एतौ अधिकारौ आगच्छतः। नस्तद्धिते इति सूत्रात् तद्धिते इति अनुवर्तते। ओः इति उवर्णस्य षष्ठ्येकवचने रूपम्। ओः इति भस्य अङ्गस्य च विशेषणत्वात् येन विधिस्तदन्तस्य इति सूत्रेण विशेषणस्य उवर्णस्य तदन्तविधौ उवर्णान्तस्य इति अर्थः उपलभ्यते। अतः सूत्रार्थो भवति - उवर्णान्तस्य भस्य अङ्गस्य गुणः स्यात् तद्धिते परे।

**उदाहरणम्** - औपगु + अ इति स्थिते यचि भम् इति सूत्रेण औपगु इत्यस्य भसंज्ञा अस्ति। पुनश्च उपगुशब्दात् प्रत्ययविधानात् उपगु इति अस्य अङ्गसंज्ञापि वर्तते। एवञ्च अण् इति प्रत्ययः तद्धिताः इति अधिकारे वर्तमानात् अणः तद्धितसंज्ञा अस्ति। अतः ओर्गुणः इति सूत्रेण औपगु

अ इत्यत्र तद्धितसंज्ञाविशिष्टे अण्प्रत्यये परे अङ्गसंज्ञाविशिष्टस्य भसंज्ञकस्य उवर्णान्तस्य गुणः ओकारः भवति। तदा औपगो अ इति स्थितिः। ततः एचोऽयवायावः इति सूत्रेण ओकारस्य अवादेशे प्रक्रियाकार्ये औपगवः इति रूपम्।

## [२८.४] अपत्यं पौत्रप्रभृति गोत्रम्॥ (४.१.१६२)

**सूत्रार्थः** - अपत्यत्वेन विवक्षितं पौत्रादि गोत्रसंज्ञं स्यात्।

**सूत्रव्याख्या** - संज्ञासूत्रम् इदम् अस्ति। अस्मिन् सूत्रे त्रीणि पदानि सन्ति। सर्वाणि पदानि प्रथमान्तानि।

अस्य सूत्रस्य अर्थो भवति - अपत्यत्वेन विवक्षितं पौत्रादि गोत्रसंज्ञं स्यात्। तस्याऽपत्यम् इति अस्मात् अपत्यमिति अनुवर्तमाने पुनः अपत्यग्रहणं पौत्रादीनाम् अपत्यविवक्षायाम् एव गोत्रत्वबोधनार्थम्। यदि पौत्रादीनां पौत्रत्वादिनाम् एव विवक्षा तदा न भवति गौत्रसंज्ञा इति बोध्यम्। अर्थात् यदि पौत्रप्रपौत्रादीनाम् अपत्यरूपेण विवक्षा वर्तते तर्हि पौत्रप्रपौत्रादीनां गोत्रसंज्ञा भवति।



## [२८.५] एको गोत्रे॥ (४.१.९३)

**सूत्रार्थः** - गोत्रे एक एवापत्यप्रत्ययः स्यात्।

**सूत्रव्याख्या** - नियमसूत्रम् इदम् अस्ति। अस्मिन् सूत्रे पदद्वयम् अस्ति। एकः इति प्रथमान्तं पदम्। गोत्रे इति सप्तम्यन्तं पदम्।

अपत्याधिकारस्य प्रत्ययाधिकारस्य च सामर्थ्यात् अपत्यप्रत्ययः इति आगच्छति। ङ्याप्प्रातिपदिकात्, प्रत्ययः, परश्च इति एते अधिकाराः आगच्छन्ति। अत्र एकः इति कथनात् इतरसंख्यायाः व्यवच्छेदात् एक एव इति नियमः उपलभ्यते। अतः सूत्रार्थो भवति - गोत्रे एक एवापत्यप्रत्ययः स्यात्

**उदाहरणम्** - उपगोः अपत्यम् औपगवः, तस्य औपगवस्य अपि अपत्यम् औपगवः, तस्य अपि अपत्यम् औपगवः इति एवम् अग्रे अपि। अर्थात् मूलपुरुषात् क्रियमाणः अपत्यप्रत्ययः गोत्रत्वेन विवक्षितानां सर्वेषां पौत्रप्रपौत्रादीनां बोधकः। प्रति वंशं तु नवीनः प्रत्ययः न भवति। एवञ्च यथा उपगोः अपत्यम् औपगवः, तथा औपगवस्यापि अपत्यम् औपगवः एव।



### पाठगतप्रश्नाः-१

२१. नञ्स्नञ्प्रत्ययविधायकं सूत्रं किम् अस्ति।

२२. स्त्रीपुंसाभ्याम् इत्यत्र कः समासः।

२३. तस्यापत्यम् इति सूत्रस्य अर्थः कः।

२४. गोत्रसंज्ञाविधायकं सूत्रं किम् अस्ति।

२५. ओर्गुणः इति सूत्रेण किम् विधीयते।

२६. एको गोत्रे इत्यस्य सूत्रस्य अर्थः कः।

## [२८.६] गर्गादिभ्यो यञ्॥ (४.१.१०५)

**सूत्रार्थः** - गर्गादिगणे पठितेभ्यः शब्देभ्यः गोत्रापत्ये तद्धितसंज्ञकः यञ्प्रत्ययः स्यात्।

**सूत्रव्याख्या** - विधिसूत्रम् इदम् अस्ति। अस्मिन् सूत्रे पदद्वयम् अस्ति। गर्गशब्दः आदिर्येषां ते गर्गादयः, तेभ्यः गर्गादिभ्यः इति तद्गुणसंविज्ञानबहुव्रीहिः। गर्गादिभ्यः इति पञ्चम्यन्तं पदम्। यञ् इति प्रथमान्तम्।

गोत्रे कुञ्जादिभ्यश्चफञ् इत्यतः गोत्रे इति अनुवर्तते। तस्यापत्यम् इत्यतः अपत्यम् इति अनुवर्तते। तस्य विभक्तिविपरिणामेन अपत्ये इति उपलभ्यते। प्रत्ययः, परश्च, ङ्याप्प्रातिपदिकात्,



तद्धिताः, समर्थानां प्रथमाद्वा इति एते अधिकाराः आगच्छन्ति। अतः सूत्रार्थो भवति - गर्गादिगणे पठितेभ्यः शब्देभ्यः गोत्रापत्ये तद्धितसंज्ञकः यञ्प्रत्ययः स्यात्।

**उदाहरणम्** - गर्गस्य गोत्रापत्यमिति लौकिकविग्रहे गर्ग+ङस् इति अलौकिकविग्रहः। गर्गशब्दः गर्गादिगणे पठितः। अतः गर्गादिभ्यो यञ् इति सूत्रेण यञ्-प्रत्ययः विधीयते। ततः अनुबन्धलोपे गर्ग ङस् य इति स्थितिः। अयं समुदायः तद्धितान्तः। अतः कृत्तद्धितसमासाश्च इति सूत्रेण प्रातिपदिकसंज्ञा भवति। ततः सुपो धातुप्रातिपदिकयोः इति सूत्रेण सुपः लोपः भवति। ततः तद्धितेष्वचामादेः इति सूत्रेण गर्ग इति समुदायस्य आदेः अकारस्य वृद्धौ गार्ग य इति स्थितिः। ततः यस्येति च इति सूत्रेण गकारोत्तरवर्तिनः अकारस्य लोपे विभक्तिकार्ये गार्ग्यः इति रूपम्। एवमेव वत्सस्य गोत्रापत्यं वात्स्यः इत्यादिकम्।

## [२८.७] यञञोश्च॥ (२.४.६४)

**सूत्रार्थः** - गोत्रे यद् यञन्तम् अञन्तम् च तदवयवयोर्लुक् स्यात्, तत्कृते बहुत्वे, न तु स्त्रियाम्।

**सूत्रव्याख्या** -विधिसूत्रम् इदम् अस्ति। अस्मिन् सूत्रे पदद्वयम् अस्ति। यञ् च अञ् च यञञौ, तयोः यञञोः इति इतरेतरद्वन्द्वः। यञञोः इति षष्ठ्यन्तम्। चेति अव्ययपदम्।

ण्यक्षत्रियार्षञितो यूनि लुगणिञोः इत्यतः लुक्, यस्कादिभ्यो गोत्रे इत्यतः गोत्रे, तद्राजस्य बहुषु तेनैवाऽस्त्रियाम् इत्यतः बहुषु, तेन, एव, अस्त्रियाम् इति पदानि अनुवर्तन्ते। अतः सूत्रार्थः भवति - गोत्रे यद् यञन्तम् अञन्तम् च तदवयवयोर्लुक् स्यात्, तत्कृते बहुत्वे, न तु स्त्रियाम्।

**उदाहरणम्** - गर्गस्य गोत्रापत्यानि इति विग्रहः। ततः प्रकृतसूत्रेण यञि प्रत्यये कृते गर्ग+यञ् इति स्थितिः। एतच्च यञन्तम्, बहुत्वविशिष्टम्, स्त्रीलिङ्गभिन्नम् अस्ति। अत गोत्रे यद् यञन्तम् तदवयवस्य लुकि सति प्रक्रियाकार्ये गर्गाः इति रूपम्।

## [२८.८] जीवति तु वंश्ये युवा॥ (४.१.१६३)

**सूत्रार्थः** - वंशे पित्रादौ जीवति सति पौत्रादेर्यदपत्यं चतुर्थादि तद् युवसंज्ञं स्यात्।

**सूत्रव्याख्या** -संज्ञासूत्रम् इदम् अस्ति। अस्मिन् सूत्रे तु पदचतुष्टयम् अस्ति। जीवति इति सप्तम्येकवचनान्तम्। तु इति अव्ययपदम्। वंश्ये इति सप्तम्येकवचनान्तम्। युवा इति प्रथमान्तम्।

अपत्यं पौत्रप्रभृति गोत्रम् इत्यतः पौत्रप्रभृति, तस्याऽपत्यम् इत्यतः अपत्यम् इति पदद्वयम् अनुवर्तते। वंशे भवः वंश्यः नाम पितृपितामहादिः। अतः सूत्रार्थः भवति - वंशे पित्रादौ जीवति सति पौत्रादेर्यदपत्यं चतुर्थादि तद् युवसंज्ञं स्यात्।

**उदाहरणम्** - मूलपुरुषः वंशप्रवर्तकः प्रथमः। मूलपुरुषस्य पुत्रः द्वितीयः, मूलपुरुषस्य पौत्रः तृतीयः, मूलपुरुषस्य प्रपौत्रः चतुर्थः। यदि पितरि पितामहे प्रपितामहे च जीवति सति चतुर्थादीनां युवसंज्ञा भवति। इयं संज्ञा गोत्रसंज्ञायाः अपवादिका।



## [२८.९] गोत्राद्यून्यस्त्रियाम्॥ (४.१.९४)

**सूत्रार्थः** - यून्यपत्ये गोत्रप्रत्ययान्तादेव प्रत्ययः स्यात्, स्त्रियां न तु युवसंज्ञा।

**सूत्रव्याख्या** -नियमसूत्रम् इदम् अस्ति। अस्मिन् सूत्रे त्रीणि पदानि सन्ति। गोत्रात् इति पञ्चम्येकवचनान्तम्। यूनि इति सप्तम्येकवचनान्तम्। अस्त्रियाम् इति सप्तम्येकवचनान्तम्।

युवापत्यार्थे प्रत्ययः भवति चेद् गोत्रप्रत्ययान्तादेव भवति, न तु मूलप्रकृतितः। अतः सूत्रार्थः भवति - यून्यपत्ये गोत्रप्रत्ययान्तादेव प्रत्ययः स्यात्, स्त्रियां न तु युवसंज्ञा।

**उदाहरणम्** -उपगोः अपत्यम् इत्यत्र तस्यापत्यम् इति सूत्रेण औत्सर्गिके अण्प्रत्यये औपगवः इति। ततः युवापत्यार्थे अत इञ् इति शास्त्रेण इञि प्रत्यये अनुबन्धलोपे प्रक्रियाकार्ये च औपगविः इति रूपम्।

## [२८.१०] यञिञोश्च॥ (४.१.१०१)

**सूत्रार्थः** - गोत्रे यौ यञिञौ, तदन्तात् युवापत्यार्थे फक् स्यात्।

**सूत्रव्याख्या** -विधिसूत्रम् इदम् अस्ति। अस्मिन् सूत्रे पदद्वयम् अस्ति। यञ् च इञ् च यञिञौ, तयोः यञिञोः इति इतरेतरद्वन्द्वः। यञिञोः इति षष्ठ्यन्तं पदम्। चेति अव्ययपदम्।

अस्मिन् सूत्रे गोत्रे कुञ्जादिभ्यश्च्फञ् इत्यतः गोत्रे इति अनुवर्तते। नडादिभ्यः फक् इत्यतः फक् इति अनुवर्तते। यञ् इञ् च प्रत्ययौ। अतः प्रत्ययग्रहणे तदन्तग्रहणम् इति परिभाषया तदन्तविधिवशात् यञन्तम् इञन्तम् च लभ्यते। अत्र षष्ठ्याः पञ्चमीत्वेन विपरिणामः भवति। पुनश्च गोत्रप्रत्ययान्तात् गोत्रप्रत्ययः न भवति, एको गोत्रे इति नियमात्। अतः युवापत्ये एतौ प्रत्ययौ भवतः। अतः सूत्रार्थः भवति - गोत्रे यौ यञिञौ, तदन्तात् युवापत्यार्थे फक् स्यात्।

**उदाहरणम्** - गर्गस्य गोत्रापत्यम् इति लौकिकविग्रहः। ततः गर्ग ङस् इति स्थिते प्रथमतया गर्गादिभ्यो यञ् इति सूत्रेण गोत्रापत्ये यञि प्रत्यये गार्ग्यः इति। ततः गोत्राद् यून्यस्त्रियाम् इति नियमेन युवापत्ये अर्थे यञिञोश्च इति सूत्रेण फक्प्रत्ययः विधीयते। ततः अनुबन्धलोपे तद्धितान्तत्वात् प्रातिपदिकसंज्ञायां सुब्लोपे सति आयनेयीनीयियः फढखछघां प्रत्ययादीनाम् इति सूत्रेण फकारस्य स्थाने आयनादेशः भवति। ततः गार्ग्य + आयन इति स्थिते यस्येति च इति अकारलोपे अट्कुप् इत्यादिना णत्वे विभक्तिकार्ये गार्ग्यायणः इति रूपम्।

## [२८.११] अत इञ्॥ (४.१.९५)

**सूत्रार्थः** - अदन्तं यत्प्रातिपदिकं तत्प्रकृतिकात् षष्ठ्यन्तात् इञ् स्यात् अपत्ये अर्थे।

**सूत्रव्याख्या** -विधिसूत्रम् इदम् अस्ति। अस्मिन् सूत्रे पदद्वयम् अस्ति। अतः इति पञ्चम्यन्तं पदम्। इञ् इति प्रथमान्तं पदम्।

तस्याऽपत्यम् इति सम्पूर्णं सूत्रम् अनुवर्तते। प्रत्ययः, परश्च, ङ्याप्प्रातिपदिकात्, तद्धिताः, समर्थानां प्रथमाद्वा इति एते अधिकाराः आगच्छन्ति। अतः इति प्रातिपदिकस्य विशेषणम्। अतः



विशेषणस्य येन विधिस्तदन्तस्य इति सूत्रेण तदन्तविधेः अदन्तात् इति लभ्यते। अतः सूत्रार्थः - अदन्तं यत्प्रातिपदिकं तत्प्रकृतिकात् षष्ठ्यन्तात् इञ् स्यात् अपत्ये अर्थे।

**उदाहरणम्**- दक्षस्य अपत्यं पुमान् इति लौकिकविग्रहः। दक्ष ङस् इति स्थिते दक्ष इति अदन्तम् प्रातिपदिकम्। अतः अपत्ये अर्थे अत इञ् इति सूत्रेण इञ्- प्रत्ययः भवति। ततः अनुबन्धलोपे तद्धितत्वात् प्रातिपदिकसंज्ञायां सुब्लोपे दक्ष+इ इति स्थितिः जायते। ततः दक्ष इत्यत्र दकारोत्तरस्य अकारस्य आदिवृद्धिः षकारोत्तरस्य अकारस्य लोपः च भवति। ततः विभक्तिकार्ये दाक्षिः इति रूपम्।

## [२८.१२] बाह्वादिभ्यश्च॥ (४.१.९६)

**सूत्रार्थः** - बाह्वादिगणपठितेभ्यः शब्देभ्यः अपत्ये अर्थे इञ्प्रत्ययो भवति।

**सूत्रव्याख्या** -विधिसूत्रम् इदम् अस्ति। अस्मिन् सूत्रे पदद्वयम् अस्ति। बाहुशब्दः आदिः येषां ते बाह्वादयः, तेभ्यः बाह्वादिभ्यः इति तद्गुणसंविज्ञानबहुव्रीहिः। बाह्वादिभ्यः इति पञ्चम्यन्तम्। चेति अव्ययपदम्।

अत इञ् इत्यतः इञ् इति अनुवर्तते। तस्याऽपत्यम् इति सम्पूर्णं सूत्रम् अनुवर्तते। प्रत्ययः, परश्च, ङ्याप्प्रातिपदिकात्, तद्धिताः इति एते अधिकाराः आगच्छन्ति। अतः सूत्रार्थः भवति - बाह्वादिगणपठितेभ्यः शब्देभ्यः अपत्ये अर्थे इञ्प्रत्ययो भवति।

**उदाहरणम्** - बाहोः अपत्यम् इति लौकिकविग्रहः। ततः बाहु ङस् इति स्थिते बाहुशब्दस्य बाह्वादिगणे पाठः अस्ति। अतः अपत्ये अर्थे बाह्वादिभ्यश्च इति सूत्रेण इञ्-प्रत्यये अनुबन्धलोपे बाहु ङस् इ इति स्थितिः जायते। अयं समुदायः तद्धितान्तः। ततः प्रातिपदिकसंज्ञायां सुपः लोपे बाहु+इ इति स्थितिः भवति। ततः बाहु इत्यत्र बकारोत्तरस्य आकारस्य आदिवृद्धिः भवति। ततः ओर्गुणः इति सूत्रेण उकारस्य गुणः ओकारः भवति। ततः एचोऽयवायावः इति सूत्रेण अवादेशे विभक्तिकार्ये बाहविः इति रूपम्। एवम् औडुलोमिः इत्यत्रापि इञ्-प्रत्यये प्रक्रियाकार्ये रूपाणि भवन्ति।



### पाठगतप्रश्नाः-१

२७. गर्गादिभ्यः कः प्रत्ययः भवति।

२८. यञञोश्च इति सूत्रस्य अर्थः कः।

२९. युवसंज्ञाविधायकं सूत्रं किम् अस्ति।

३०. फक्-प्रत्ययविधायकं सूत्रं किम् अस्ति।

३१. दाक्षिः इत्यत्र कः प्रत्ययः।

३२. बाह्वादिभ्यः कः प्रत्ययो भवति।

## [२८.१३] शिवादिभ्योऽण्॥ (४.१.११२)

**सूत्रार्थः -** शिवादिगणे पठितेभ्यः प्रातिपदिकेभ्यः अपत्ये अर्थे अण् प्रत्ययः स्यात्।

**सूत्रव्याख्या -** विधिसूत्रम् इदम् अस्ति। अस्मिन् सूत्रे पदद्वयम् अस्ति। शिवशब्दः आदिर्येषां ते शिवादयः, तेभ्यः शिवादिभ्यः इति तद्गुणसंविज्ञानबहुव्रीहिः। शिवादिभ्यः इति पञ्चम्यन्तम्। अण् इति प्रथमान्तं पदम्।

तस्याऽपत्यम् इत्यतः अपत्यम् इति अनुवर्तते। प्रत्ययः, परश्च, ङ्याप्प्रातिपदिकात्, तद्धिताः, समर्थानां प्रथमाद्वा इति एते अधिकाराः आगच्छन्ति। अतः सूत्रार्थः भवति- शिवादिगणे पठितेभ्यः प्रातिपदिकेभ्यः अपत्ये अर्थे अण् प्रत्ययः स्यात्।

**उदाहरणम्-** शिवस्य अपत्यमिति लौकिकविग्रहः। शिव ङस् इति स्थिते शिव इत्यस्य शिवादिगणे पाठः अस्ति। अतः अपत्ये अर्थे शिवादिभ्योऽण् इति सूत्रेण अण्- प्रत्यये अनुबन्धलोपे शिव ङस् अ इति स्थितिः जायते। अयं समुदायः तद्धितान्तः। अतः प्रातिपदिकसंज्ञायां सुब्लोपे शिव+अ इति स्थितिः जायते। ततः शिव इत्यत्र शकारोत्तरस्य इकारस्य वृद्धिः वकारोत्तरस्य अकारस्य लोपश्च भवति। तदा शैव् अ इति स्थिते ततः विभक्तिकार्ये शैवः इति रूपम्। एवम् एव गाङ्गः इत्यत्र अपि।

## [२८.१४] ऋष्यन्धकवृष्णिकुरुभ्यश्च॥ (४.१.११४)

**सूत्रार्थः -** ऋषिभ्यः अन्धकेभ्यः वृष्णिभ्यः कुरुभ्यश्च अपत्ये अण् प्रत्ययः स्यात्।

**सूत्रव्याख्या -** विधिसूत्रम् इदम् अस्ति। अस्मिन् सूत्रे पदद्वयम् अस्ति। ऋषयश्च अन्धकाश्च वृष्णश्च कुरवश्च ऋष्यन्धकवृष्णिकुरवः, तेभ्यः ऋष्यन्धकवृष्णिकुरुभ्यः इति इतरेतरद्वन्द्वः। ऋष्यन्धकवृष्णिकुरुभ्यः इति पञ्चम्यन्तम्। चेति अव्ययपदम्।

तस्याऽपत्यम् इति सम्पूर्णं सूत्रम् अनुवर्तते। प्रत्ययः, परश्च, ङ्याप्प्रातिपदिकात्, तद्धिताः इति एते अधिकाराः आगच्छन्ति। अतः सूत्रार्थः भवति- ऋषिभ्यः अन्धकेभ्यः वृष्णिभ्यः कुरुभ्यश्च अपत्ये अण् तद्धितः प्रत्ययः स्यात्।

**उदाहरणम्-** वसिष्ठस्य अपत्यम् इति लौकिकविग्रहः। वसिष्ठ ङस् इति स्थिते वसिष्ठ इति प्रातिपदिकम् ऋषिवाचकम्। अतः अपत्ये अर्थे ऋष्यन्धकवृष्णिकुरुभ्यश्च इति सूत्रेण अण्-प्रत्यये अनुबन्धलोपे वसिष्ठ ङस् अ इति स्थितिः भवति। अयं समुदायः तद्धितान्तः। अतः समुदायस्य प्रातिपदिकसंज्ञायां सुब्लोपे वसिष्ठ+अ इति स्थितिः जायते। ततः वसिष्ठ इत्यत्र वकारोत्तरस्य अकारस्य वृद्धौ आकारः भवति। ततः वासिष्ठ इत्यत्र ठकारोत्तस्य अकारस्य लोपे विभक्तिकार्ये वर्णमेलनेन वासिष्ठः इति रूपम्। एवमेव अनेन सूत्रेण अन्धकवंशे श्वफल्कस्य वृष्णिवंशे वासुदेवस्य कुरुवंशे नकुलस्य च अन्तर्भावः भवति। अत एतेभ्यः प्रातिपदिकेभ्यः अपत्ये अर्थे ऋष्यन्धकवृष्णिकुरुभ्यश्च इति सूत्रेण अण्-प्रत्ययः भवति। ततः प्रक्रियाकार्ये श्वाफल्कः, वासुदेवः, नाकुलः इत्यादीनि रूपाणि सिद्ध्यन्ति।



## [२८.१५] स्त्रीभ्यो ढक्॥ (४.१.१२०)

**सूत्रार्थः** - स्त्रीप्रत्ययान्तेभ्यः अपत्ये अर्थे ढक् प्रत्ययः स्यात्।

**सूत्रव्याख्या** - विधिसूत्रम् इदम् अस्ति। अस्मिन् सूत्रे पदद्वयम् अस्ति। स्त्रीभ्यः इति पञ्चम्यन्तं पदम्। ढक् इति प्रथमान्तं पदम्।

तस्याऽपत्यम् इत्यतः अपत्यम् इति अनुवर्तते। तस्य विभक्तिविपरिणामेन अपत्ये इति रूपम्। प्रत्ययः, परश्च, ङ्याप्प्रातिपदिकात्, तद्धिताः इति एते अधिकाराः आगच्छन्ति। स्त्रीभ्यः इत्यनेन टाप्, ङीप् इत्यादीनां ग्रहणम् इष्टम्। प्रत्ययग्रहणे तदन्ताः ग्राह्याः इति परिभाषया स्त्रीप्रत्ययान्तेभ्यः इति लभ्यते। अतः सूत्रार्थः भवति- स्त्रीप्रत्ययान्तेभ्यः अपत्ये अर्थे ढक् प्रत्ययः स्यात्।

**उदाहरणम्-** विनतायाः अपत्यम् इति लौकिकविग्रहः। विनता ङस् इति स्थिते विनता इति टाप्प्रत्ययान्तः। अतः अपत्ये अर्थे स्त्रीभ्यो ढक् इति सूत्रेण ढक्-प्रत्ययः भवति। ततः अनुबन्धलोपे कृते प्रातिपदिकसंज्ञा सुब्लोपश्च भवति। तदा वसिष्ठ ढ इति स्थिते किति च इति सूत्रेण आदिवृद्धिः। ततः आयनेयीनीयियः फढखछघां प्रत्ययादीनाम् इति सूत्रेण ढकारस्य एयादेशः भवति। ततः यस्येति च इति सूत्रेण आकारलोपे ततः विभक्तिकार्ये वैनतेयः इति रूपम्।

## [२८.१६] कन्यायाः कनीन च॥ (४.१.११६)

**सूत्रार्थः** - कन्याशब्दस्य अपत्ये अर्थे कनीनादेशः प्रकृतितः अण् प्रत्ययश्च स्यात्।

**सूत्रव्याख्या** -विधिसूत्रम् इदम् अस्ति। अस्मिन् सूत्रे त्रीणि पदानि सन्ति। कन्यायाः इति षष्ठ्यन्तम्। कनीन इति लुप्तप्रथमान्तम्। चेति अव्ययपदम्।

अस्मिन् सूत्रे शिवादिभ्योऽण् इत्यतः अण् इति अनुवर्तते। तस्याऽपत्यम् इति सम्पूर्णं सूत्रम् अनुवर्तते। प्रत्ययः, परश्च, ङ्याप्प्रातिपदिकात्, तद्धिताः इति एते अधिकाराः आगच्छन्ति। अतः सूत्रस्य अर्थः भवति- कन्याशब्दस्य अपत्ये अर्थे कनीनादेशः प्रकृतितः अण् प्रत्ययश्च स्यात्।

**उदाहरणम्-** कन्यायाः अपत्यम् इति लौकिकविग्रहः। कन्या ङस् इति स्थिते अपत्ये अर्थे कन्यायाः कनीन च इति सूत्रेण कन्या इति प्रकृतेः कनीनादेशः अण्-प्रत्ययः च भवति। ततः अनुबन्धलोपे कनीन +अ इति स्थितिः जायते। समुदायः अयं तद्धितान्तः। अतः प्रातिपदिकसंज्ञा सुपः लोपश्च भवति। ततः आदिवृद्धौ अकारलोपे ततः विभक्तिकार्ये कानीनः इति रूपम्।

## [२८.१७] राजश्वशुराद्यत्॥ (४.१.१३७)

**सूत्रार्थः** - राजन्, श्वशुर चेति प्रातिपदिकात् अपत्ये अर्थे यत् प्रत्ययः स्यात्।

**सूत्रव्याख्या** -विधिसूत्रम् इदम् अस्ति। अस्मिन् सूत्रे पदद्वयम् अस्ति। राजा च श्वशुरश्च राजश्वशुरम्, तस्मात् राजश्वशुरात् इति समाहारद्वन्द्वः। राजश्वशुरात् इति पञ्चम्यन्तं पदम्। यत् इति प्रथमान्तं पदम्।



तस्याऽपत्यम् इति सम्पूर्णं सूत्रम् अनुवर्तते। प्रत्ययः, परश्च, ङ्याप्प्रातिपदिकात्, तद्धिताः इति एते अधिकाराः आगच्छन्ति। अतः सूत्रार्थः भवति - राजन्, श्वशुर चेति प्रातिपदिकात् अपत्ये अर्थे यत् प्रत्ययः स्यात्। अत्र राज्ञो जातावेवेति वाच्यम् इति वार्तिकम् अस्ति। अर्थात् राजन् इति प्रातिपदिकात् जातौ वाच्यायाम् एव यत् भवति।

## [२८.१८] ये चाऽभावकर्मणः॥ (६.४.१३८)

**सूत्रार्थः** - यादौ तद्धिते परे अन् प्रकृत्या स्यात्, न तु भावकर्मणोः।

**सूत्रव्याख्या** -विधिसूत्रम् इदम् अस्ति। अस्मिन् सूत्रे त्रीणि पदानि सन्ति। ये इति सप्तम्यन्तम् पदम्। चेति अव्ययपदम्। भावश्च कर्म च भावकर्मणी, तयोः भावकर्मणोः, न भावकर्मणोः इति द्वन्द्वगर्भनञ्तत्पुरुषः। अभावकर्मणोः इति सप्तम्यन्तं पदम्।

अन् इति सम्पूर्णं सूत्रम्, आपत्यस्य च तद्धितेऽनाति इत्यतः तद्धिते, प्रकृत्यैकाच् इत्यतः प्रकृत्या चेति अनुवर्तते। अङ्गस्य इति अधिकारे पठितः। अतः प्रत्यये इति पदम् उपलभ्यते। ये इति प्रत्यये इत्यस्य विशेषणम्। अतः तदादिविधिना यादौ प्रत्यये इति अर्थः लभ्यते। अतः सूत्रार्थः भवति - यादौ तद्धिते परे अन् प्रकृत्या स्यात्, न तु भावकर्मणोः।

**उदाहरणम्**- राज्ञः अपत्यम् जातिः इति लौकिकविग्रहः। राजन् ङस् इति स्थिते अपत्ये अर्थे क्षत्रियजातौ वाच्यायां सत्यां राजश्वशुराद्यत् इति सूत्रेण यत्प्रत्ययः भवति। ततः अनुबन्धलोपे कृते अयं समुदायः तद्धितान्तः। अतः प्रातिपदिकसंज्ञायां सुपः लोपे राजन्+य इति स्थितिः भवति। ततः यचि भम् इति भसंज्ञा भवति। ततः नस्तद्धिते इति सूत्रेण अनः लोपः प्राप्नोति। तदा ये चाऽभावकर्मणोः इति सूत्रेण यादौ तद्धित परे अनः प्रकृतिभावात् लोपः न भवति। ततः वर्णमेलनेन विभक्तिकार्ये राजन्यः इति रूपम्।

## [२८.१९] क्षत्राद् घः॥ (४.१.१२८)

**सूत्रार्थः** - क्षत्रात् प्रातिपदिकात् अपत्ये अर्थे तद्धितसंज्ञकः घः प्रत्ययः स्यात्।

**सूत्रव्याख्या** -विधिसूत्रम् इदम् अस्ति। अस्मिन् सूत्रे पदद्वयम् अस्ति। क्षत्रात् इति पञ्चम्यन्तं पदम्। घः इति प्रथमान्तं पदम्।

तस्याऽपत्यम् इत्यतः अपत्यम् इति अनुवर्तते। प्रत्ययः, परश्च, ङ्याप्प्रातिपदिकात्, तद्धिताः इति एते अधिकाराः आगच्छन्ति। अतः सूत्रार्थः भवति - क्षत्रात् प्रातिपदिकात् अपत्ये अर्थे तद्धितसंज्ञकः घः प्रत्ययः स्यात्। अत्रापि क्षत्रप्रातिपदिकात् जात्यां वाच्यायां सत्याम् एव घः प्रत्ययः भवति, न अन्यथा।

**उदाहरणम्** - क्षत्रस्य अपत्यं जातिः इति लौकिकविग्रहः। क्षत्र ङस् इति स्थिते क्षत्रप्रातिपदिकस्य जातौ गम्यमानायाम् अपत्ये अर्थे क्षत्रात् घः इति सूत्रेण घप्रत्ययः भवति। ततः क्षत्र ङस् घ इति स्थिते तद्धितान्तत्वात् प्रातिपदिकसंज्ञा सुपः लोपः च भवति। ततः आयनेयीनीयियः



फढखछघां प्रत्ययादीनाम् इति सूत्रेण घकारस्य इयादेशे क्षत्र इय इति स्थितिः। ततः क्षत्र इत्यस्य ककारोत्तरस्य अकारस्य च लोपः भवति। ततः विभक्तिकार्ये क्षत्रियः इति रूपम्।



## पाठगतप्रश्नाः-२

३३. शैवः इत्यत्र कः प्रत्ययः।

३४. वासिष्ठः इत्यत्र केन सूत्रेण कः प्रत्ययः।

३५. स्त्रिभ्यः कः प्रत्ययः भवति।

३६. कन्यायाः कः आदेशः कश्च प्रत्ययः भवति।

३७. क्षत्रात् कः प्रत्ययः भवति।

३८. ये चाभावकर्मणोः इति सूत्रस्य अर्थः कः।

---

## [२८.२०] रेवत्यादिभ्यष्ठक्॥ (४.१.१४६)

**सूत्रार्थः** - रेवत्यादिगणेभ्यः पठितेभ्यः प्रातिपदिकेभ्यः अपत्ये अर्थे ठक् प्रत्ययः स्यात्।

**सूत्रव्याख्या** -विधिसूत्रम् इदम् अस्ति। अस्मिन् सूत्रे पदद्वयम् अस्ति। रेवतीशब्दः आदिः येषां ते रेवत्यादयः, तेभ्यः रेवत्यादिभ्यः इति तद्गुणसंविज्ञानबहुव्रीहिः। रेवत्यादिभ्यः इति पञ्चम्यन्तम्। ठक् इति प्रथमान्तम्।

तस्याऽपत्यम् इति सम्पूर्णं सूत्रम् अनुवर्तते। प्रत्ययः, परश्च, ङ्याप्प्रातिपदिकात्, तद्धिताः इति एते अधिकाराः आगच्छन्ति। अतः सूत्रार्थः भवति - रेवत्यादिगणेभ्यः पठितेभ्यः प्रातिपदिकेभ्यः अपत्ये अर्थे ठक् प्रत्ययः स्यात्।

**उदाहरणम्**- रेवत्याः अपत्यम् इति लौकिकविग्रहः। ततः रेवती ङस् इति स्थिते रेवती इत्यस्य रेवत्यादिगणे पाठः अस्ति। अतः अपत्ये अर्थे रेवत्यादिभ्यष्ठक् इति सूत्रेण ठक्-प्रत्यये अनुबन्धलोपे रेवती ङस् ठ् इति स्थितिः जायते। ततः प्रातिपदिकसंज्ञायां सुब्लोपे च रेवती+ठ् इति स्थितिः जायते। तदा-

## [२८.२१] ठस्येकः॥ (७.३.५०)

**सूत्रार्थः** - अङ्गात् परस्य ठस्य इकादेशः स्यात्।

**सूत्रव्याख्या** -विधिसूत्रम् इदम् अस्ति। अस्मिन् सूत्रे पदद्वयम् अस्ति। ठस्य इति षष्ठ्यन्तं पदम्। इकः इति प्रथमान्तं पदम्।

अत्र अङ्गस्य इति अधिकारः अस्ति। अतः सूत्रार्थः भवति - अङ्गात् परस्य ठस्य इकादेशः स्यात्। इक इति आदेशः अदन्तः।



**उदाहरणम्-** रेवती ठ् इति स्थिते ठस्येकः इति सूत्रेण ठस्य इकादेशः भवति। ततः रेवती+इक इति स्थिते किति च इत्येनन आदिवृद्धिः भवति। ततः रेवती इत्यत्र तकारोत्तस्य ईकारस्य लोपे ततः विभक्तिकार्ये रैवरिकः इति रूपम्।

## [२८.२२] जनपदशब्दात् क्षत्रियादञ्॥ (४.१.१६८)

**सूत्रार्थः** - जनपदक्षत्त्रियवाचकात् शब्दात् अपत्ये अर्थे अञ् स्यात्।

**सूत्रव्याख्या** -विधिसूत्रम् इदम् अस्ति। अस्मिन् सूत्रे त्रीणि पदानि सन्ति। जनपदवाचकः शब्दः जनपदशब्दः, तस्मात् जनपदशब्दात् इति पञ्चम्यन्तम्। क्षत्रियात् इत्यपि पञ्चम्यन्तम्। अञ् इति प्रथमान्तम् पदम्।

तस्याऽपत्यम् इत्यतः अपत्यम् इति अनुवर्तते। प्रत्ययः, परश्च, ङ्याप्प्रातिपदिकात्, तद्धिताः इति एते अधिकाराः आगच्छन्ति। अतः सूत्रार्थः भवति - जनपदक्षत्त्रियवाचकात् शब्दात् अपत्ये अर्थे अञ् स्यात्।

**उदाहरणम्** - पञ्चालस्य अपत्यम् इति लौकिकविग्रहः। पञ्चाल ङस् इति स्थिते अपत्ये अर्थे जनपदशब्दात् क्षत्रियादञ् इति सूत्रेण अञ्-प्रत्ययः अनुबन्धलोपश्च भवति। ततः पञ्चाल ङस् अ इति स्थिते प्रातिपदिकसंज्ञा सुब्लोपश्च भवति। ततः पञ्चाल अ इति स्थिते आदिवृद्धिः अकारलोपश्च भवति। ततः विभक्तिकार्ये पाञ्चालः इति रूपम्।

## [२८.२३] कुरुनादिभ्यो ण्यः॥ (४.१.१७२)

**सूत्रार्थः** - जनपदक्षत्त्रियवाचकेभ्यः कुरुशब्देभ्यः नकारादिशब्देभ्यश्च अपत्ये अर्थे ण्यः प्रत्ययः स्यात्।

**सूत्रव्याख्या** -विधिसूत्रम् इदम् अस्ति। अस्मिन् सूत्रे पदद्वयम् अस्ति। नकारः आदिर्येषां ते नादयः इति बहुव्रीहिसमासः, कुरुश्च नादयश्च कुरुनादयः, तेभ्यः कुरुनादिभ्यः इति इतरेतरद्वन्द्वः। कुरुनादिभ्यः इति पञ्चम्यन्तम्। ण्यः इति प्रथमान्तम् पदम्।

तस्याऽपत्यम् इति सम्पूर्णं सूत्रम् अनुवर्तते। जनपदशब्दात् क्षत्रियादञ् इत्यतः जनपदशब्दात् क्षत्रियात् इति पदम् अनुवर्तते। प्रत्ययः, परश्च, ङ्याप्प्रातिपदिकात्, तद्धिताः इति एते अधिकाराः आगच्छन्ति। अतः सूत्रार्थः भवति - जनपदक्षत्त्रियवाचकेभ्यः कुरुशब्देभ्यः नकारादिशब्देभ्यश्च अपत्ये अर्थे ण्यः प्रत्ययः स्यात्।

**उदाहरणम्-** कुरोः अपत्यम् इति लौकिकविग्रहः। कुरु ङस् इति स्थिते कुरुशब्दः जनपदविशेषस्य क्षत्रियस्य वाचकः। अतः कुरुनादिभ्यो ण्यः इति सूत्रे अपत्ये अर्थे ण्य-प्रत्ययः भवति। ततः अनुबन्धलोपे सति प्रातिपदिकसंज्ञा सुब्लोपश्च भवति। ततः कुरु+अ इति स्थिते ओर्गुणः इति उकारस्य गुणः ओकारः भवति। ततः वान्तो यि प्रत्यये इति सूत्रेण ओकारस्य अवादेशः भवति। ततः आदिवृद्धौ विभक्तिकार्ये च कौरव्यः इति रूपम्। एवमेव नैषध्यः इत्यादिषु तथैव भविष्यति।



## [२८.२४] ते तद्राजाः॥ (४.१.१७४)

**सूत्रार्थः** - जनपदशब्दात् क्षत्रियादञ् इति सूत्रेण विहिताः अञादयः प्रत्ययाः तद्राजासंज्ञाः स्युः।

**सूत्रव्याख्या** -संज्ञासूत्रम् इदम् अस्ति। अत्र पदद्वयम् अस्ति। ते इति प्रथमान्तं पदम्। तद्राजाः इति प्रथमान्तं पदम्।

सूत्रार्थः- तच्छब्देन पूर्वस्य परामर्शः भवति। अतः सूत्रार्थः भवति - जनपदशब्दात् क्षत्रियादञ् इति सूत्रेण विहिताः अञादयः प्रत्ययाः तद्राजासंज्ञाः स्युः। प्रायः अञ्, अण्, ञ्यण्, ण्य इति चत्वारः तद्राजसंज्ञकाः। अष्टाध्याय्यादिषु इतोऽपि तद्राजप्रत्ययः प्राप्यते।

## [२८.२५] तद्राजस्य बहुषु तेनैवास्त्रियाम्॥ (२.४.६२)

**सूत्रार्थः** - बहुषु अर्थेषु तद्राजस्य लुक् तदर्थकृते बहुत्वे, न तु स्त्रियाम्।

**सूत्रव्याख्या** -विधिसूत्रम् इदम् अस्ति। अत्र पञ्च पदानि सन्ति। तद्राजस्य इति षष्ठ्यन्तम्। बहुषु इति सप्तम्यन्तम्। तेन इति तृतीयान्तम्। एव इति अव्ययपदम्। न स्त्री अस्त्री, तस्याम् अस्त्रियाम् इति सप्तम्यन्तम्।

ण्यक्षत्त्रियार्षञितो यूनि लुगणिञोः इत्यतः लुग् इति अनुवर्तते। अतः सूत्रार्थः भवति - बहुषु अर्थेषु तद्राजस्य लुक् तदर्थकृते बहुत्वे, न तु स्त्रियाम्।

**उदाहरणम्** - पञ्चालस्य अपत्यानि, पञ्चालानां जनपदानां राजानो वेति लौकिकविग्रहः। पञ्चाल ङस् इति स्थिते जनपदशब्दात् क्षत्रियादञ् इति सूत्रेण अञ्-प्रत्यये प्रक्रियाकार्ये पाञ्चालः इति रूपम्। अत्र पाञ्चालशब्दस्तु अञ्प्रत्ययान्तः। अतः पाञ्चालशब्दस्य बहुत्वविवक्षायां जस्प्रत्ययः भवति। ते तद्राजाः इति सूत्रेण तद्राजसंज्ञा भवति। अत्र तद्राजस्य बहुत्वविवक्षा अस्ति। अतः तद्राजस्य बहुषु तेनैवास्त्रियाम् इति सूत्रेण तद्राजप्रत्ययस्य लुक् भवति। ततः निमित्तापाये नैमित्तिकस्याप्यपायः इति आदिवृद्ध्यादिकस्य अभावः अस्ति। ततः प्रथमयोः पूर्वसवर्णः इति सवर्णदीर्घे प्रक्रियाकार्ये पञ्चालाः इति रूपम्।



## पाठगतप्रश्नाः-३

३९. ठक्-प्रत्ययविधायकं सूत्रं किम्।

४०. ठस्य कः आदेशः भवति।

४१. पाञ्चालः इत्यत्र केन सूत्रेण कः प्रत्ययः।

४२. कुरुनादिभ्यः कः प्रत्ययः भवति।

४३. तद्राजसंज्ञाविधायकं सूत्रं किम्।



४४. पञ्चालाः इत्यत्र तद्राजस्य लुक् केन सूत्रेण भवति।



## पाठसारः

अस्मिन् पाठे अपत्ये अर्थे प्रत्ययः विधीयते। यथा उपगोः अपत्यम् इति विग्रहे तस्यापत्यम् इति सूत्रेण अण्-प्रत्ययः विधीयते। तेन औपगवः इति रूपम्। अर्थात् तद्धितवृत्त्या उपगुसम्बन्धि-अपत्यम् इति अर्थः समायाति। एवञ्च पाठे अस्मिन् अपत्ये अर्थे अञ्, ठक्,अण्, फक्, इञ् च इति एते प्रत्ययाः विधीयन्ते। एवञ्च गोत्रापत्यम् युवापत्यम् इत्यादिसंज्ञा अपि अस्मिन् प्रकरणे विराजते। गोत्रापत्ये युवापत्ये अर्थे प्रत्ययाः विधीयन्ते। एवञ्च तद्राजसंज्ञकस्य प्रत्ययस्य बहुत्वे गम्यमाने सति लुक् भवति। एवञ्च अस्मिन् प्रकरणे न केवलम् अपत्यार्थे तद्धितप्रत्ययाः विधीयन्ते अपि तु अपत्यभिन्नार्थे भवहिताद्यर्थे अपि तद्धितप्रत्ययाः भवन्ति। यथा पुंसु भवः इति विग्रहे भवार्थे स्नञ्-प्रत्यये प्रक्रियाकार्ये पौंस्नः इति रूपम्। परन्तु अपत्यार्थे अधिकाः प्रत्ययाः भवन्ति। अतः अपत्याधिकारप्रकरणम् इति नाम भवति।



## विशेषशब्दावली

१. **आदिवृद्धिः** - तद्धितेष्वचामादेः, किति च इत्यादिसूत्रेण ञिति णिति किति च परे आदेः अचः वृद्धिः भवति। यथा उपगोः अपत्यम् इत्यत्र अण्-प्रत्ययः भवति। णित्प्रत्ययः अस्ति। अतः उपगु इति शब्दस्य आदिः अच् उकारः। अत एव तस्य एव आदेः अचः उकारस्य वृद्धिः भवति।

२. **सौत्रत्वात् लुक्** - छन्दोवत् सूत्राणि भवन्ति इति महाभाष्यकारवचनम्। अतः छन्दसः मेलनाय कुत्रचित् विभक्तेः अदर्शनं भवति। यथा प्रकृते प्रकरणे तस्यापत्यम् इति सूत्रे तस्य इति शब्दात् पञ्चमी आगता। परन्तु सूत्रे समागतायाः पञ्चम्याः अदर्शनं भवति। अतः शास्त्रे उच्यते - सौत्रत्वात् लुक् भवति।

३. **विभक्तिविपरिणामः** - लोके यथा विभक्तीनां प्रयोगः भवति तथा शास्त्रे कदाचित् अन्यथा अपि भवति। गर्गादिभ्यो यञ् इति अस्मिन् सूत्रे तस्याऽपत्यम् इत्यतः अपत्यम् इति प्रथमान्तं पदम् अनुवर्तते। परन्तु सूत्रे प्रथमान्तस्य अपत्यशब्दस्य तु सप्तमीत्वेन परिवर्तनम् भवति। अयम् एव विभक्तिविपरिणामः।



## पाठान्तप्रश्नाः

१. तस्यापत्यम् इति सूत्रस्य व्याख्यां करोतु।



२. अपत्यं पौत्रप्रभृति गोत्रम् इति सूत्रस्य व्याख्यां करोतु।

३. एको गोत्रे इति सूत्रं व्याख्यात।

४. गार्ग्यः इति रूपं साधयत।

५. जीवति तु वंश्ये युवा इति सूत्रस्य व्याख्यां करोतु।

६. गार्ग्यायणः इति रूपं साधयत।

७. दाक्षिः इति रूपं साधयत।

८. जनपदशब्दात्क्षत्रियादञ् इति सूत्रं व्याख्यात।

९. राजन्यः इति रूपं साधयत।

१०. तद्राजस्य बहुषु तेनैवास्त्रियाम् इति सूत्रं व्याख्यात।

११. बाहविः इति रूपं साधयत।

१२. गाङ्गः इति रूपं साधयत।

१३. ऋष्यन्धकवृष्णिकुरुभ्यश्च इति सूत्रं व्याख्यात।

१४. ये चाऽभावकर्मणोः इति सूत्रं व्याख्यात।

१५. पाञ्चालः इति रूपं साधयत।



## पाठगतप्रश्नानाम् उत्तराणि

अत्र उपरि प्रदत्तानां प्रश्नानाम् उत्तराणि प्रदीयन्ते।

**उत्तराणि-१**

१. स्त्रीपुंसाभ्यां नञ्स्नञौ भवनात् इति सूत्रम्।

२. स्त्रीपुंसाभ्याम् इत्यत्र इतरेतरद्वन्द्वः।

३. षष्ठ्यन्तात्कृतसन्धेः समर्थादपत्येऽर्थे उक्ता वक्ष्यमाणाश्च प्रत्ययाः वा स्युः इति अर्थः।

४. अपत्यं पौत्रप्रभृति गोत्रम् इति सूत्रम्।

५. गुणः।

६. गोत्रे एक एवापत्यप्रत्ययः स्यात् इति अर्थः।

**उत्तराणि-२**

७. यञ-प्रत्ययः।

८. गोत्रे यद्यञन्तमञन्तं च तदवयवयोरेतयोर्लुक् स्यात्तत्कृते बहुत्वे न तु स्त्रियाम्।

९. जीवति तु वंश्ये युवा इति सूत्रम्।

१०. यञिञोश्च इति सूत्रम्।

११. इञ्-प्रत्ययः।



१२. इञ्-प्रत्ययः।

**उत्तराणि-३**

१३. अण्-प्रत्ययः।

१४. ऋष्यन्धकवृष्णिकुरुभ्यश्च

१५. ढक्-प्रत्ययः।

१६. कनीन इति आदेशः अण्-प्रत्ययः।

१७. घ-प्रत्ययः।

१८. यादौ तद्धिते परेऽन् प्रकृत्या स्यान्न तु भावकर्मणोः।

**उत्तराणि-४**

१९. रेवत्यादिभ्यष्ठक्।

२०. इकादेशः।

२१. जनपदशब्दात्क्षत्रियादञ् इत्यनेन सूत्रेण अञ्-प्रत्ययः।

२२. ण्य-प्रत्ययः।

२३. ते तद्राजाः इति सूत्रम्।

२४. तद्राजस्य बहुषु तेनैवास्त्रियाम्।

## ॥ इति अष्टाविंशः पाठः ॥



# २९

# अथ मत्वर्थीयप्रकरणम्

## प्रस्तावना

तद्धितप्रत्ययेषु मतुबपि कश्चित् तद्धितप्रत्ययः विद्यते। तदस्यास्त्यस्मिन्निति मतुप् (५.२.९४) इति सूत्रात् आरभ्य मतुबर्थीयप्रकरणम् आरभ्यते। तदस्य अस्ति उत तदस्मिन् अस्ति इत्यस्मिन् अर्थे मतुब्प्रत्ययः भवति। यथा – बुद्धिः अस्य अस्मिन् वा अस्ति इत्यर्थे मतुब्प्रत्ययो भवति। बुद्धिमान्, धनवान्, ज्ञानवान् इत्यादीनि रूपाणि भवन्ति। न केवलं मतुब्प्रत्ययस्य मतुबर्थीयप्रकरणे अन्तर्भावः अस्ति। अपि तु तदस्यास्त्यस्मिन्निति अर्थे विद्यमानाः अपि प्रत्ययाः मतुबर्थप्रकरणे अन्तर्भवन्ति। यथा– तदस्यास्त्यस्मिन्नित्यर्थे विन्, लच्, इन्, अण् इत्यादयः अपि अनेके प्रत्ययाः भवन्ति। यथा– माया अस्य अस्ति इत्यर्थे इन्प्रत्ययः, तपः अस्य अस्ति इत्यर्थे विन् इत्यादयः प्रत्ययाः भवन्ति। एतेषामपि प्रत्ययानां मतुबर्थीयप्रकरणे अन्तर्भावो विद्यते।



## उद्देश्यानि

अमुं पाठं पठित्वा भवान् –

- मतुबर्थीयप्रत्ययान् ज्ञातुं समर्थो भवेत्।
- मतुब्प्रत्ययाः कस्मिन् अर्थे भवन्ति इति ज्ञातुं शक्नुयात्।
- मतुप्प्रत्ययविधायकसूत्राणाम् उदाहरणानि ज्ञातुं शक्नुयात्।
- मतुप्प्रत्ययेन निर्मितानां शब्दानाम् अर्थम् अवगन्तुं शक्नुयात्।
- मतुप्प्रत्ययेन शब्दस्य निर्माणं कर्तुं योग्यो भवेत्।
- वृत्त्या महद्वाक्यं कथं लघुतया प्रयुङ्क्ते इति तद्विषये सम्यक् ज्ञातुं शक्नुयात्
- सूत्रात् कथम् अर्थनिर्णयः भवति इति ज्ञातुं शक्यो भवेत्।
- अनुवृत्तिः अधिकारश्च इति एतान् ज्ञातुं शक्नुयात्।

## [२९.१] तदस्यास्त्यस्मिन्निति मतुप्॥ (५.२.९४)

**सूत्रार्थः** - प्रथमान्ताद् प्रातिपदिकात् अस्य अस्ति इत्यर्थे अस्मिन् अस्ति इत्यर्थे वा तद्धितसंज्ञकः मतुब्प्रत्ययः परः भवति।



**सूत्रव्याख्या** -विधिसूत्रम् इदं भवति। अस्मिन् सूत्रे षट् पदानि सन्ति। तद् इति प्रथमान्तम्। अत्र पञ्चम्यर्थे प्रथमा भवति। अस्य इति षष्ठ्यन्तम्। अस्ति इति क्रियापदम्। अस्मिन् इति सप्तम्यन्तं पदम्। इति अव्ययपदम्। मतुप् इति प्रथमान्तम्।

तद्धिताः, प्रत्ययः, परश्च, ङ्याप्प्रातिपदिकात्, समर्थानां प्रथमाद्वा इति एते अधिकाराः आगच्छन्ति। अतः सूत्रार्थः भवति - प्रथमान्ताद् प्रातिपदिकात् अस्य अस्ति इत्यर्थे अस्मिन् अस्ति इत्यर्थे वा तद्धितसज्ञकः मतुब्प्रत्ययः परः भवति।

यथा- गावः अस्य अस्मिन् वा सन्ति इत्यर्थे प्रकृतसूत्रेण मतुब्प्रत्ययो भवति। मतुपः पकारस्य हलन्त्यम् इत्यनेन उकारस्य उपदेशेऽजनुनासिक इत् इत्यनेन च इत्संज्ञायां मत् इत्येतत् मात्रम् अवशिष्यते। अर्थात् तदस्य अस्ति, तद् अस्मिन् अस्ति वा इति अर्थे मतुब्प्रत्ययः भवति। प्रकृतसूत्रे इतिशब्दस्य सन्निधानात् तत् अस्य अस्ति तत् अस्मिन् अस्ति वा इति प्रसिद्धार्थेन साकं अन्यस्मिन् अर्थे अपि मतुपः प्रयोगो भवति। महाभाष्यकारेण एकेन श्लोकेन प्रोक्तम्-

"भूमनिन्दाप्रशंसासु नित्ययोगेऽतिशायने।

संसर्गेऽस्तिविवक्षायां भवन्ति मतुबादयः।।" इति

अर्थात् अस्तिविवक्षायां बहुत्वे, प्रशंसायाम्, नित्ययोगे, अतिशायने, सम्बन्धे च मतुबादयः प्रत्ययाः भवन्ति। यथा बह्व्यो गावः सन्ति अस्य इति गोमान् इति तु अस्तिविवक्षायां बहुत्वादिषु उदाहरणम्।

पुनश्च प्रकृतसूत्रे अस्ति इत्यत्र यद्यपि एकवचनं प्रयुक्तं तथापि एकवचनं विवक्षितं नास्ति। तस्मात् एकत्वे द्वित्वे बहुत्वे च मतुबादयः भवन्ति। तस्मादेव गावः सन्ति अस्य इत्यत्र बहुत्वे अपि मतुप् भवति। एवमेव अस्य इत्यत्रापि एकवचनं विवक्षितं नास्ति। तस्मादेव धनानि सन्ति एषाम् इत्यत्र बहुत्वे अपि मतुब्प्रत्ययः भवति।

परन्तु अस्ति इत्यत्र तु वर्तमानकालः विवक्षितः भवति। तस्मात् भूतार्थे भविष्यदर्थे च मतुब्प्रत्ययः न भवति। तस्मात् धनम् आसीत् अस्य उत धनं भविष्यति अस्य इत्यर्थे मतुब्प्रत्ययः न भवति। अर्थात् अस्ति इत्यत्र संख्यायाः अभावे अपि कालस्य तु विवक्षा अस्ति।

**उदाहरणम्-** गावः सन्ति अस्य इति लौकिकविग्रहे वर्तमानकालः तद् अस्य अस्ति इति अर्थश्च वर्तते। अतः गो जस् इति स्थिते प्रकृतसूत्रेण प्रथमान्तात् गो इति प्रातिपदिकात् मतुप् भवति। मतुपः उकारस्य पकारस्य च लोपे गो जस् मत् इति स्थितिः भवति। अयं समुदायः तद्धितान्तः अस्ति। अतः कृत्तद्धितसमासाश्च इति सूत्रेण प्रातिपदिकसंज्ञा भवति। ततः सुपो धातुप्रातिपदिकयोः इत्यनेन सुपः लोपो भवति। तदा गो मत् इति स्थिते एकदेशविकृतमनन्यवत् इति न्यायेन ततः प्रातिपदिकसंज्ञा भवति। ततः स्वौजस् इत्यादिना सूत्रेण विभक्तिकार्ये सौ अनुबन्धलोपे गोमत् स् इति स्थितिः भवति। ततः अत्वसन्तस्य चाधातोः इत्यनेन उपधायां स्थितस्य अकारस्य दीर्घे गोमात् स् इति स्थितिः भवति। तदा उगिदचां सर्वस्थानेऽधातोः इत्यनेन नुमि कृते अनुबन्धलोपे च गोमान् त् स् इति स्थितिः भवति। ततः



हल्ङ्याब्भ्यो दीर्घात्सुतिस्यपृक्तं हल् इत्यनेन अपृक्तस्य सकारस्य लोपः भवति। तदा गोमान् त् इति स्थिते संयोगान्तस्य लोपः इत्यनेन संयोगान्तस्य तकारस्य लोपे वर्णमेलनेन गोमान् इति रूपम्।

## [२९.२] रसादिभ्यश्च॥ (५.२.९५)

**सूत्रार्थः** - तद् अस्य अस्ति इत्यर्थे तद् अस्मिन् अस्ति इत्यर्थे वा रसादिगणे पठितात् प्रातिपदिकात् मतुब्प्रत्ययः भवति।

**सूत्रव्याख्या** -विधिसूत्रम् इदम् अस्ति। अस्मिन् सूत्रे द्वे पदे स्तः। रस आदिः येषां ते रसादयः। तेभ्यः रसादिभ्यः इति तद्गुणसंविज्ञानबहुव्रीहिः। रसादिभ्यः इति पञ्चम्यन्तं पदम्। चेति अव्ययपदम्।

तद्धिताः, प्रत्ययः, परश्च, ङ्याप्प्रातिपदिकात्, समर्थानां प्रथमाद्वा इति एते अधिकाराः आगच्छन्ति। तदस्यास्त्यस्मिन्निति मतुप् इति सम्पूर्णं सूत्रम् अनुवर्तते। अतः सूत्रार्थः भवति - तद् अस्य अस्ति इत्यर्थे तद् अस्मिन् अस्ति इत्यर्थे वा रसादिगणे पठितात् प्रातिपदिकात् मतुब्प्रत्ययः भवति। रसः, रूपम्, वर्णः, गन्धः, स्पर्शः, शब्दः, स्नेहः, भावः चेति एते शब्दाः रसादिगणे पठिताः। तस्मात् तदस्य अस्ति उत तद् अस्मिन् इति अर्थे एतेभ्यः शब्देभ्यः परं मतुप् प्रत्ययः भवति।

**शङ्का** - तदस्यास्त्यस्मिन्निति मतुप् इति सूत्रेण तद् अस्य अस्ति तद् अस्मिन् अस्ति वा इति अर्थे रसादिगणे पठितेभ्यः प्रातिपदिकेभ्यः मतुब्प्रत्ययविधानं सम्भवति। अतः शङ्का जायते यत् रसादिभ्यश्च इति सूत्रेण पुनः मतुब्प्रत्ययविधानं किमर्थम्।

**समाधानम्** - अत्र समाधानं प्रदीयते - रसादिगणे पठितानि प्रातिपदिकानि अदन्तानि। अतः अदन्तस्य प्रातिपदिकस्य अत इनिठनौ इति सूत्रेण तद् अस्य अस्ति तद् अस्मिन् अस्ति वेति अर्थे इन्प्रत्ययः ठन्प्रत्ययश्च प्राप्नोति। ठन्प्रत्ययं इन्प्रत्ययं च बाधित्वा पुनः मतुब्प्रत्ययविधानाय रसादिभ्यश्च इति सूत्रम् आवश्यकम्।

**उदाहरणम्** - रसः अस्य अस्मिन् वा अस्ति इति लौकिकविग्रहः। रसशब्दः रसादिगणे पठितः। अतः रसादिभ्यश्च इति सूत्रेण तद् अस्य अस्मिन् वा अस्ति इति अर्थे मतुब्प्रत्ययः भवति। तदा नुबन्धलोपे कृते रस स् मत् इति स्थितिः भवति। अयं समुदायः तद्धितान्तः। अतः कृत्तद्धितसमासाश्च इति सूत्रेण प्रातिपदिकसंज्ञा भवति। ततः सुपो धातुप्रातिपदिकयोः इति सूत्रेण सूत्रेण सुपः लोपः भवति। तदा रस मत् इति स्थितिः जायते। तदा मादुपधायाश्च मतोर्वोऽयवादिभ्यः इति मकारस्य वकारादेशः भवति। ततः एकदेशविकृतमनन्यवत् इति न्यायेन विभक्तिकार्ये सु-प्रत्ययः। ततः रस वत् स् इति स्थिते उपधादीर्घे नुमागमे च रस वान् स् इति स्थितिः। तदा हल्ङ्याब्भ्यः इत्यादिना सूत्रेण सुलोपे संयोगान्तस्य तकारस्य लोपे च वर्णमेलनेन रसवान् इति रूपम्।

प्रकृते मकारस्य स्थाने वकारादेशः विधीयते। तदर्थम् सूत्रम् -

## [२९.३] मादुपधायाश्च मतोर्वोऽयवादिभ्यः॥ (८.२.९)

**सूत्रार्थः** - मवर्णावर्णान्ताद् मवर्णावर्णोपधाच्च यवादिवर्जितात् परस्य मतोः मस्य वः स्यात्।



**सूत्रव्याख्या** -विधिसूत्रम् इदम् अस्ति। म् च अश्च अनयोः समाहारः इति मम्, तस्मात् मात् इति समहारद्वन्द्वः। मात् इति पञ्चम्यन्तं पदम्। यवः आदिर्येषां ते यवादयः, न यवादयः अयवादयः, तेभ्यः अयवादिभ्यः इति पञ्चम्यन्तं पदम्। उपधायाः इति पञ्चम्यन्तं पदम्। च इति अव्ययपदम्। मतोः इति षष्ठ्यन्तं पदम्।

पदस्य इति अधिकारः अस्ति। उपधायाः इत्यस्य विशेषणं मात् इति तस्मात् येन विधिस्तदन्तस्य इति सूत्रेण तदन्तविधिना मकारान्तः अवर्णान्तः च इति लभ्यते। माद् इति अस्य द्विवारं ग्रहणं भवति। माद् इति उपधायाः विशेषणं भवति। तेन मकारोपधाद् अवर्णोपधाच्च प्रातिपदिकात् इत्यपि लभ्यते। सूत्रे चकारग्रहणस्य सामर्थ्यात् अर्थद्वयं समायाति। मात् परस्य मतोर्वो स्यादिति एकः अर्थः। उपधायाश्च मात् परस्य मतोर्वो भवतीत्यपरः अर्थः। अर्थद्वयं मिलित्वा कश्चन एकः अर्थः प्रतिपादितः। स तावत् - मवर्णावर्णान्ताद् मवर्णावर्णोपधाच्च यवादिवर्जितात् परस्य मतोर्मस्य वः स्यात्। अर्थात् मकारस्य वकारादेशः भवति। तत्र निमित्तानि भवन्ति-

१. मकारान्तं प्रातिपदिकम् ,अवर्णान्तं प्रातिपदिकम् ,मवर्णोपधं प्रातिपदिकम् , अवर्णोपधं प्रातिपदिकं वा इत्येतेषु किमपि स्यात्।

२. तच्च प्रातिपदिकं यवादिगणपठितं न स्यात् इति।

एतेन मकारान्तं प्रातिपदिकम् ,अवर्णान्तं प्रातिपदिकम् , मवर्णोपधं प्रातिपदिकम् , अवर्णोपधं प्रातिपदिकं वा तच्च यवादिगणपठितप्रातिपदिकभिन्नम् इत्येतेभ्यः परस्य मतोः मकारस्य स्थाने वकारः स्यात् इति फलितार्थः भवति।

**उदाहरणम्** - १. यवादिगणपठितप्रातिपदिकभिन्नस्य मकारान्तप्रातिपदिकस्य उदाहरणं भवति किंवान् इति। किम् +वान् इति यवादिगणे किम्– शब्दस्य पाठो नास्ति। पुनश्च मकारान्तं प्रातिपदिकम् अस्ति। अतः मतोः मकारस्य वकारे प्रक्रियाकार्ये च किंवान् इति रूपम् अस्ति।

२. यवादिगणपठितप्रातिपदिकभिन्नस्य अवर्णान्तप्रातिपदिकस्य उदाहरणं भवति रसवान् इति। रस इति अदन्तं प्रातिपदिकम् अस्ति। पुनश्च रस इति प्रातिपदिकं यवादिगणे पठितं नास्ति। अतः रस इति अदन्तप्रातिपदिकात् परस्य मतोः मस्य वकारादेशे प्रक्रियाकार्ये च रसवान् इति रूपम्।

३. यवादिगणपठितप्रातिपदिकभिन्नस्य मवर्णोपधप्रातिपदिकस्य उदाहरणं भवति लक्ष्मीवान् इति। लक्ष्मी+ मत् इत्यत्र मकारोपधं प्रातिपदिकं लक्ष्मी इति। तच्च प्रातिपदिकं यवादिगणे अपि पठितं नास्ति। अतः लक्ष्मी इति मवर्णोपधात् परस्य मतोः मकारस्य वकारे प्रक्रियाकार्ये च लक्ष्मीवान् इति रूपम्।

४. यवादिगणपठितप्रातिपदिकभिन्नस्य अवर्णोपधप्रातिपदिकस्य उदाहरणं भवति यशस्वान् इति। यशस् + मत् इति स्थिते यशस् इति प्रातिपदिकम् अवर्णोपधम् अस्ति। तच्च यवादिगणे पठितम् अपि नास्ति। अतः यशस् इति अवर्णोपधात् प्रातिपदिकात् परस्य मतोः मकारस्य वकारे प्रक्रियाकार्ये च यशस्वान् इति रूपम् अस्ति।



## [२९.४] तसौ मत्वर्थे॥ (१.४.१९)

**सूत्रार्थः** - तान्तौ सान्तौ भंसज्ञकौ स्तः मत्वर्थे प्रत्यये परे।

**सूत्रव्याख्या** - इदम् संज्ञासूत्रम् अस्ति। अस्मिन् सूत्रे द्वे पदे स्तः। मतोः अर्थः मत्वर्थः, तस्मिन् मत्वर्थे इति षष्ठीतत्पुरुषः। मत्वर्थे इति सप्तम्यन्तं पदम्। तश्च स च तसौ इति इतरेतरद्वन्द्वः। तसौ इति प्रथमान्तं पदम्।

यचि भम् इत्यतः भम् इति अनुवर्तते। मतुप् प्रत्ययः अस्ति। अतः मतुब्प्रत्ययेन प्रातिपदिकस्य आक्षेपः भवति। प्रातिपदिकस्य विशेषणम् तसौ इति। अतः विशेषणत्वात् येन विधिस्तदन्तस्य इति सूत्रेण तदन्तविधिना तान्तं सान्तञ्च लभ्यते। अतः सूत्रार्थः भवति- तान्तौ सान्तौ भसज्ञकौ स्तः मत्वर्थे प्रत्यये परे।

सूत्रम् इदं स्वादिष्वसर्वनामस्थाने इति सूत्रस्य अपवादशास्त्रम्। प्रकृतस्थले स्वादिष्वसर्वनामस्थाने इति सूत्रेण पदसंज्ञा भवति। तसौ मत्वर्थे इत्यनेन भसंज्ञा भवति। परन्तु आ कडारादेका संज्ञा इत्यधिकारसामर्थ्यात् एकस्याः संज्ञायाः ग्रहणं भवति। तदा या संज्ञा परा अनवकाशा च भवति, तस्य ग्रहणं भवति। तस्मात् भसंज्ञा पदसंज्ञां बाधते।

**उदाहरणम्**- गुरुतौ स्तः अस्य इति विग्रहे तदस्यास्त्यस्मिन्निति मतुप् इति शास्त्रेण मतुप् भवति। ततः अनुबन्धलोपे प्रातिपदिकसंज्ञा भवति। तदा गुरुत् औ मत् इति स्थिते स्वादिष्वसर्वनामस्थाने इति सूत्रेण गुरुत् इत्यस्य पदसंज्ञा प्राप्ता। गुरुत् इति तान्तम् प्रातिपदिकम् अस्ति। अतः प्रकृतसूत्रेण तान्तस्य प्रातिपदिकस्य भसंज्ञा भवति। अतः पदसंज्ञां प्रबाध्य भसंज्ञा विधीयते, परत्वात् अनवकाशत्वाच्च। अतः पदसंज्ञायाः अभावात् तकारस्य झलां जशोऽन्ते इति शास्त्रेण दकारः न भवति। ततः विभक्तिकार्ये सौ उपधादीर्घे सुलोपे संयोगान्तस्य च लोपे प्रक्रियाकार्ये गुरुत्मान् इति रूपम्।

## [२९.५] गुणवचनेभ्यो मतुपो लुगिष्टः॥ (वा)

**अर्थः**– गुणवचनात् प्रातिपदिकात् परस्य मतोः लुग् स्यात्।

**व्याख्या**- वार्तिकम् इदम् अस्ति। तदस्यास्त्यस्मिन्निति मतुप् इति सूत्रभाष्ये प्रकृतवार्तिकम् इदम् अस्ति। प्रकृतवार्तिकेन मतुब्प्रत्ययस्य लुक् विधीयते। तस्मात् विधिशास्त्रम् अस्ति। अत्र चत्वारि पदानि सन्ति। गुणवचनेभ्यः इति पञ्चम्यन्तं पदम्। मतुपः इति षष्ठ्यन्तं पदम्। लुग् इष्टिः च इति पदद्वयम् प्रथमान्तम्। गुणम् उक्तवन्तः इति गुणवचनाः। अर्थात् आदौ गुणम् उक्त्वा पश्चात् गुणयुक्तं द्रव्यम् एव अभिन्नरूपेण कथयति, तत् गुणवचनं भवति। यथा शुक्लः इत्यादयः प्रथमतया गुणम् उक्त्वापि पश्चात् अभिन्नरूपेण गुणयुक्तं द्रव्यं कथयति। अतः शुक्लशब्दः गुणवचनः। अतः सूत्रार्थ भवति– गुणवचनात् प्रातिपदिकात् परस्य मतोः लुग् स्यात्।

**उदाहरणम्**- शुक्लः ( गुणः) अस्य अस्ति इति विग्रहे तदस्यास्त्यस्मिन्निति मतुप् इति शास्त्रेण मतुब्प्रत्ययः भवति। ततः अनुबन्धलोपे शुक्ल + मत् इति स्थितिः जायते। प्रकृते शुक्लशब्दः

समानरूपेण गुणं गुणिनं च कथयति। अतः शुक्लशब्दः गुणवचनः। तस्मात् शुक्ल इति गुणवचनात् प्रातिपदिकात् परस्य मतोः प्रकृतवार्तिकेन लुक् भवति। ततः विभक्तिकार्ये शुक्लः इति रूपम्।



## पाठगतप्रश्नाः-१

अत्र केचित् पाठगतप्रश्नाः प्रदीयन्ते।

१. मतुब्प्रत्ययः केन सूत्रेण विधीयते।

२. गोमान् इत्यत्र केन सूत्रेण कः प्रत्ययः।

३. अस्ति इत्यत्र कालविवक्षा अस्ति न वा।

४. रसादिभ्यश्च इत्यस्य अर्थः कः।

५. मादुपधायाश्च मतोर्वोऽयवादिभ्यः इति सूत्रेण किं विधीयते।

६. तसौ मत्वर्थे इत्यनेन का संज्ञा विधीयते।

---

## [२१.६] प्राणिस्थादातो लजन्यतरस्याम्॥ (५.२.९६)

**सूत्रार्थः** - प्राणिस्थवाचकात् प्रथमान्तात् आदन्तात् प्रातिपदिकात् तदस्यास्त्यस्मिन्नित्यर्थे विकल्पेन तद्धितसंज्ञकः लच् प्रत्ययः परः भवति।

**सूत्रव्याख्या** -विधिसूत्रम् इदम् अस्ति। अस्मिन् सूत्रे चत्वारि पदानि सन्ति। प्राणिषु तिष्ठति इति प्राणिस्थम्, तस्मात् प्राणिस्थात् इति पञ्चम्येकवचनान्तं पदम्। आतः इत्यपि पञ्चम्येकवचनान्तं पदम्। लच् इति प्रथमैकवचनान्तं पदम्। अन्यतरस्याम् इति अव्ययपदम्।

तद्धिताः, प्रत्ययः, परश्च, ङ्याप्प्रातिपदिकात्, समर्थानां प्रथमाद्वा इति अधिकाराः आगच्छन्ति। तदस्यास्त्यस्मिन्निति मतुप् इत्यतः तदस्यास्त्यस्मिन्निति इति अनुवर्तते। प्राणिस्थात् इत्यनेन प्राणिस्थवाचकात् इति बोध्यम्। आतः इति प्रातिपदिकस्य विशेषणत्वात् आदन्तादिति अर्थः लभ्यते। अतः सूत्रार्थः भवति - प्राणिस्थवाचकात् प्रथमान्तात् आदन्तात् प्रातिपदिकात् तदस्यास्त्यस्मिन्नित्यर्थे विकल्पेन तद्धितसंज्ञकः लच् प्रत्ययः परः भवति। अर्थात् अस्य सूत्रस्य प्रवृत्तौ निमित्तानि -

१. प्राणिस्थवाचकं प्रातिपदिकम् आवश्यकम्।

२.तच्च प्रातिपदिकम् आदन्तं स्यात्।

३. तच्च अदन्तं प्रातिपदिकं प्रथमाविभक्त्यन्तं स्यात्।

**उदाहरणम्**- चूडालः, चूडावान् च प्रकृतसूत्रस्य उदाहरणम् अस्ति। चूडा इति प्रातिपदिकं प्राणिस्थवाचकम् अस्ति। यतो हि प्राणिनि स्थितस्य केशसमूहस्य वाचकं चूडापदम्। पुनश्च तच्च आदन्तं प्रातिपदिकम् अस्ति। पुनश्च प्रथमान्तं पदमपि अस्ति। अतः चूडा अस्य अस्ति इति विग्रहे



प्रकृतशास्त्रेण विकल्पेन लच्प्रत्ययः विधीयते। ततः अनुबन्धलोपे तद्धितान्तस्य प्रातिपदिकसंज्ञा भवति। ततः सुब्लोपे चूडा +ल इति स्थितिः जायते। ततः एकदेशविकृतमनन्यवत् इति न्यायेन ततः प्रातिपदिकसंज्ञायां विभक्तिकार्ये चूडालः इति रूपम्। लचः अभावपक्षे तदस्यास्त्यस्मिन्निति मतुप् इति शास्त्रेण मतुब्प्रत्ययः भवति। ततः अनुबन्धलोपे मकारस्य वकारादेशे सति प्रक्रियाकार्ये वर्णमेलनेन चूडावान् इति रूपम्।

## [२९.७] लोमादिपामादिपिच्छादिभ्यः शनेलचः॥ (५.२.१००)

**सूत्रार्थः** - तदस्यास्त्यस्मिन्निति अर्थे लोमादिपामादिपिच्छादिगणे पठितेभ्यः प्रथमान्तेभ्यः प्रातिपदिकेभ्यः विकल्पेन तद्धितसंज्ञकः शनेलचः प्रत्ययाः स्युः।

**सूत्रव्याख्या** -विधिसूत्रम् इदम् अस्ति। अस्मिन् शास्त्रे द्वे पदे स्तः। लोमन् शब्दः आदिर्येषां ते लोमादयः, पामन् शब्दः आदिर्येषां ते पामादयः, पिच्छशब्दः आदिर्येषां ते पिच्छादयः। उभयत्र तु तद्गुणसंविज्ञानबहुव्रीहिः। लोमादयश्च पामादयश्च पिच्छादयश्च लोमादिपामादिपिच्छादयः, तेभ्यः लोमादिपामादिपिच्छादिभ्यः इति इतरेतरद्वन्द्वः। लोमादिपामादिपिच्छादिभ्यः इति पञ्चम्यन्तं पदम्। श च न च इलच्च इति शनेलचः इति इतरेतरद्वन्द्वः। शनेलचः इति प्रथमान्तं पदम्।

तद्धिताः, प्रत्ययः, परश्च, ङ्याप्प्रातिपदिकात्, समर्थानां प्रथमाद्वा इति एते अधिकाराः आगच्छन्ति। तदस्यास्त्यस्मिन्निति मतुप् इति सूत्रात् तद्, अस्य, अस्ति, अस्मिन्, इति पदम् अनुवर्तते। प्राणिस्थादातो लजन्यतरस्याम् इत्यस्मात् अन्यतरस्याम् इति पदम् अनुवर्तते। अतः सूत्रार्थः भवति - तदस्यास्त्यस्मिन्निति अर्थे लोमादिपामादिपिच्छादिगणे पठितेभ्यः प्रथमान्तेभ्यः प्रातिपदिकेभ्यः विकल्पेन तद्धितसंज्ञकाः शनेलचः प्रत्ययाः स्युः। यथासंख्यमनुदेशः समानाम् इति परिभाषया लोमादिगणपठितप्रातिपदिकेभ्यः विकल्पेन शप्रत्ययः, पामादिगणपठितप्रातिपदिकेभ्यः विकल्पेन नप्रत्ययः, पिच्छादिगणपठितप्रातिपदिकेभ्यः विकल्पेन इलच् प्रत्ययो भवति। अपरस्मिन् पक्षे तु मतुब्प्रत्ययो भवति।

**उदाहरणम्**- लोमानि अस्य सन्ति इति विग्रहे लोमन् - शब्दस्य लोमादिगणे पाठः अस्ति। अतः लोमादिपामादिपिच्छादिभ्यः शनेलचः इति सूत्रेण शप्रत्ययः भवति। अयं समुदायः तद्धितान्तः। अतः तद्धितान्तस्य प्रातिपदिकसंज्ञायां सुपः लोपे लोमन् + श इति स्थितिः भवति। स्वादिष्वसर्वनामस्थाने इति शास्त्रेण लोमनः पदसंज्ञा भवति। ततः न लोपः प्रातिपदिकान्तस्य इति शास्त्रेण नकारलोपः भवति। ततः विभक्तिकार्ये लोमशः इति रूपम्। शप्रत्ययस्य अभावपक्षे तदस्यास्त्यस्मिन्निति मतुप् इति शास्त्रेण मतुब्प्रत्ययः भवति। ततः अनुबन्धलोपे मकारस्य वकारादेशे सति विभक्तिकार्ये वर्णमेलनेन लोमवान् इति रूपम्।

पाम अस्य अस्ति इति विग्रहे पामन् - शब्दस्य पामादिगणे पाठः अस्ति। अतः लोमादिपामादिपिच्छादिभ्यः शनेलचः इति शास्त्रेण नप्रत्ययः भवति। अयं समुदायः तद्धितान्तः। अतः तद्धितान्तस्य प्रातिपदिकसंज्ञायां सुपः लोपे पामन् + न इति स्थितिः जायते। स्वादिष्वसर्वनामस्थाने इति शास्त्रेण पामनः पदसंज्ञा अस्ति। न लोपः प्रातिपदिकान्तस्य इति शास्त्रेण नकारलोपे विभक्तिकार्ये



पामनः इति रूपम्। नप्रत्ययस्य अभावपक्षे तदस्यास्त्यस्मिन्निति मतुप् इति शास्त्रेण मतुब्प्रत्ययः भवति। ततः अनुबन्धलोपे मकारस्य वकारादेशे सति विभक्तिकार्ये वर्णमेलनेन पामवान् इति रूपम्।

पिच्छम् अस्य अस्ति इति विग्रहे पिच्छ - शब्दस्य पिच्छादिगणे पाठः अस्ति। अतः लोमादिपामादिपिच्छादिभ्यः शनेलचः इति शास्त्रेण इलच् - प्रत्ययः भवति। ततः अनुबन्धलोपे तद्धितान्तस्य अस्य समुदायस्य प्रातिपदिकसंज्ञायां सुपः लोपे पिच्छ + इल इति स्थितिः भवति। यचि भम् इति शास्त्रेण पिच्छशब्दस्य भसंज्ञा भवति। ततः यस्येति च इति सूत्रेण छकारोत्तरस्य अकारस्य लोपः भवति। ततः विभक्तिकार्ये वर्णमेलनेन पिच्छिलः इति रूपम्। इलच् - प्रत्ययस्य अभावपक्षे तदस्यास्त्यस्मिन्निति मतुप् इति शास्त्रेण मतुब्प्रत्ययः भवति। ततः अनुबन्धलोपे मकारस्य वकारादेशे सति विभक्तिकार्ये पिच्छवान् इति रूपम्।

## [२९.८] प्रज्ञाश्रद्धार्चाभ्यो णः॥ (५.२.१०१)

**सूत्रार्थः** - प्रज्ञाश्रद्धार्चाभ्यः प्रथमान्तेभ्यः प्रातिपदिकेभ्यः तदस्यास्त्यस्मिन्निति इत्यर्थे विकल्पेन तद्धितसंज्ञकः णप्रत्ययो भवति।

**सूत्रव्याख्या** -विधिसूत्रम् इदम् अस्ति। अस्मिन् शास्त्रे द्वे पदे स्तः। प्रज्ञा च श्रद्धा च अर्चा च प्रज्ञाश्रद्धार्चाः, ताभ्यः प्रज्ञाश्रद्धार्चाभ्यः इति इतरेतरद्वन्द्वः। प्रज्ञाश्रद्धार्चाभ्यः इति पञ्चम्यन्तं पदम्। णः इति तु प्रथमान्तं पदम्।

तद्धिताः, प्रत्ययः, परश्च, ङ्याप्प्रातिपदिकात्, समर्थानां प्रथमाद्वा इति एते अधिकाराः आगच्छन्ति। तदस्यास्त्यस्मिन्निति मतुप् इति सूत्रात् तद्, अस्य, अस्ति, अस्मिन् इति पदम् अनुवर्तते। प्राणिस्थादातो लजन्यतरस्याम् इत्यस्मात् अन्यतरस्याम् इति पदम् अनुवर्तते। अतः सूत्रार्थः भवति - प्रज्ञाश्रद्धार्चाभ्यः प्रथमान्तेभ्यः प्रातिपदिकेभ्यः तदस्यास्त्यस्मिन्निति इत्यर्थे विकल्पेन तद्धितसंज्ञकः णप्रत्ययो भवति। णप्रत्ययाभावपक्षे तु मतुप् भवति।

**उदाहरणम्** - प्रज्ञा अस्मिन् अस्ति इति विग्रहे प्रज्ञाश्रद्धार्चाभ्यो णः इति णप्रत्ययः भवति। ततः अनुबन्धलोपे सति प्राज्ञ+अ इति स्थितिः। अयं समुदायः तद्धितान्तः। अतः प्रातिपदिकसंज्ञा सुलोपश्च भवति। ततः तद्धितेष्वचामादेः इति शास्त्रेण आदिवृद्धिः भवति। ततः प्राज्ञ+अ इति स्थिते यस्येति च इति अकारलोपे विभक्तिकार्ये प्राज्ञः इति। णप्रत्ययाभावपक्षे तु मतुपि सति प्रज्ञावान् इति रूपम् अस्ति।

श्रद्धा अस्मिन् अस्ति इति विग्रहे प्रज्ञाश्रद्धार्चाभ्यो णः इति णप्रत्ययः अनुबन्धलोपः आदिवृद्धिश्च भवति। ततः श्राद्ध+अ इति स्थितिः जायते। ततः प्रक्रियाकार्ये वर्णमेलनेन श्राद्धः इति। णप्रत्ययाभावपक्षे तु मतुपि सति श्रद्धावान् इति रूपम् अस्ति।

अर्चा अस्मिन् अस्ति इति विग्रहे प्रज्ञाश्रद्धार्चाभ्यो णः इति णप्रत्ययः अनुबन्धलोपः आदिवृद्धिश्च भवति। ततः आर्चा+अ इति स्थिते यस्येति च इति आकारलोपे विभक्तिकार्ये आर्चः इति। णप्रत्ययाभावपक्षे तु मतुपि सति अर्चावान् इति रूपम् अस्ति।



## [२९.९] दन्त उन्नत उरच्॥ (५.२.१०६)

**सूत्रार्थः** - उन्नते दन्ते गम्यमाने सति प्रथमान्तात् दन्तप्रातिपदिकात् तदस्यास्त्यस्मिन्निति इत्यर्थे तद्धितसंज्ञकः उरच् प्रत्ययः भवति।

**सूत्रव्याख्या** -विधिसूत्रम् इदम् अस्ति। अस्मिन् सूत्रे त्रीणि पदानि सन्ति। दन्ते इति सप्तम्यन्तं पदम्। उन्नते इति सप्तम्यन्तं पदम्। उरच् इति प्रथमान्तं पदम्।

तद्धिताः, प्रत्ययः, परश्च, ङ्याप्प्रातिपदिकात्, समर्थानां प्रथमाद्वा इति एते अधिकाराः आगच्छन्ति। तदस्यास्त्यस्मिन्निति मतुप् इति सूत्रात् तद्, अस्य, अस्ति, अस्मिन् इति पदम् अनुवर्तते। प्रकृते दन्तपदस्य आवृत्तिः क्रियते। तच्च पञ्चम्यन्तं पदम् अस्ति। अतः सूत्रस्य सामान्यार्थः - उन्नते दन्ते गम्यमाने सति प्रथमान्तात् दन्तप्रातिपदिकात् तदस्यास्त्यस्मिन्निति इत्यर्थे तद्धितसंज्ञकः उरच् प्रत्ययः भवति।

**उदाहरणम्**- उन्नताः दन्ताः अस्य सन्ति इत्यर्थे दन्त उन्नत उरच् इति शास्त्रेण उरच्- प्रत्ययः भवति। ततः अनुबन्धलोपे सति दन्त जस् उर इति स्थितिः भवति। अयं समुदायः तद्धितान्तः। अतः प्रातिपदिकसंज्ञा भवति। ततः सुपः लोपे दन्त + उर इति स्थितिः भवति। ततः यस्येति च इति तकारोत्तरवर्तिनः अकारस्य लोपे विभक्तिकार्ये वर्णमेलनेन च दन्तुरः इति रूपम्।



### पाठगतप्रश्नाः-२

७. प्राणिस्थादातो लजन्यतरस्याम् इति सूत्रार्थं लिखत।

८. प्राणिस्थादातो लजन्यतरस्याम् इति कीदृशं सूत्रम्।

९. लोमादिपामादिपिच्छादिभ्यः के प्रत्ययाः।

१०. प्राज्ञः इत्यत्र केन सूत्रेण कः प्रत्ययः भवति।

११. उन्नते दन्ते गम्यमाने कः प्रत्ययः भवति।

१२. प्रज्ञाश्राद्धार्चाभ्यः इत्यत्र कः समासः।

---

## [२९.१०] ऊषसुषिमुष्कमधोः रः॥ (५.२.१०७)

**सूत्रार्थः** - ऊषसुषिमुष्कमधुभ्यः प्रथमान्तेभ्यः प्रातिपदिकेभ्यः तद्धितसंज्ञकः रप्रत्ययः स्यात्।

**सूत्रव्याख्या** -विधिसूत्रम् इदम् अस्ति। अस्मिन् सूत्रे पदद्वयम् अस्ति। ऊषश्च सुषिश्च मुष्कश्च मधु च इति ऊषसुषिमुष्कमधु, तस्मात् ऊषसुषिमुष्कमधोः इति समाहारद्वन्द्वः। ऊषसुषिमुष्कमधोः इति पञ्चम्यन्तं पदम्। रः इति प्रथमान्तं पदम्।



तद्धिताः, प्रत्ययः, परश्च, ङ्याप्प्रातिपदिकात्, समर्थानां प्रथमाद्वा इति एते अधिकाराः आगच्छन्ति। तदस्यास्त्यस्मिन्निति मतुप् इति सूत्रात् तद्, अस्य, अस्ति, अस्मिन् इति पदम् अनुवर्तते। अतः सूत्रार्थः भवति - ऊषसुषिमुष्कमधुभ्यः प्रथमान्तेभ्यः प्रातिपदिकेभ्यः तद्धितसंज्ञकः रप्रत्ययः स्यात्।

**उदाहरणम्** - ऊषः अस्य अस्ति इति विग्रहे ऊषसुषिमुष्कमधोः रः इति शास्त्रेण रप्रत्ययः भवति। अयं समुदायः तद्धितान्तः। अतः तद्धितान्तत्वात् प्रातिपदिकसंज्ञा सुलोपश्च भवति। ततः विभक्तिकार्ये वर्णमेलनेन ऊषरः इति रूपम्।

सुषिः अस्य अस्ति इति विग्रहे ऊषसुषिमुष्कमधोः रः इति शास्त्रेण रप्रत्यये प्रातिपदिकसंज्ञायां सुलोपे विभक्तिकार्ये सुषिरः इति रूपम्।

मुष्कः अस्य अस्ति इति विग्रहे ऊषसुषिमुष्कमधोः रः इति शास्त्रेण रप्रत्यये प्रातिपदिकसंज्ञायां सुलोपे विभक्तिकार्ये मुष्करः इति रूपम्।

मधु अस्य अस्ति इति विग्रहे ऊषसुषिमुष्कमधोः रः इति शास्त्रेण रप्रत्यये प्रातिपदिकसंज्ञायां सुलोपे विभक्तिकार्ये मधुरः इति रूपम्।

## [२९.११] केशाद्वोऽन्यतरस्याम्॥ (५.२.१०९)

**सूत्रार्थः** - प्रथमान्तात् केशप्रातिपदिकात् तदस्यास्त्यस्मिन्निति अर्थे विकल्पेन तद्धितसंज्ञकः वप्रत्ययः स्यात्।

**सूत्रव्याख्या** -विधिसूत्रम् इदम् अस्ति। अस्मिन् सूत्रे त्रीणि पदानि सन्ति। केशात् इति पञ्चम्यन्तं पदम्। वः इति प्रथमान्तं पदम्। अन्यतरस्याम् इति अव्ययपदम्।

तद्धिताः, प्रत्ययः, परश्च, ङ्याप्प्रातिपदिकात्, समर्थानां प्रथमाद्वा इति एते अधिकाराः आगच्छन्ति। तदस्यास्त्यस्मिन्निति मतुप् इति सूत्रात् तद्, अस्य, अस्ति, अस्मिन् इति पदम् अनुवर्तते। अतः सूत्रार्थः भवति - प्रथमान्तात् केशप्रातिपदिकात् तदस्यास्त्यस्मिन्निति अर्थे विकल्पेन तद्धितसंज्ञकः वप्रत्ययः स्यात्।

**शङ्का** - प्राणिस्थादातो लजन्यतरस्याम् इत्यतः अन्यतरस्याम् इति पदस्य अनुवृत्तिः सम्भवति। तथापि प्रकृतसूत्रे अन्यतरस्याम् इति पदं किमर्थम्।

**समाधानम्** - प्रकृतसूत्रे अन्यतरस्याम् इति पदं न दीयते चेत् वप्रत्ययस्य अभावपक्षे केवलं मतुब्प्रत्ययो भवति। परन्तु वप्रत्ययस्य अभावपक्षे अपि मतुब्प्रत्ययेन साकम् अत इनिठनौ इति सूत्रेण प्राप्तयोः इनिठनोः संग्रहणाय अन्यतरस्याम् इति।

**उदाहरणम्** - केशाः अस्य सन्ति इति विग्रहे केशाद्वोऽन्यतरस्याम् इति शास्त्रेण वप्रत्ययः भवति। अयं समुदायः तद्धितान्तः। अतः तद्धितान्तत्वात् प्रातिपदिकसंज्ञा सुलोपश्च भवति। ततः केश + व इति स्थिते विभक्तिकार्ये केशवः इति। वप्रत्ययस्य अभावपक्षे तु तदस्यास्त्यस्मिन्निति मतुप् इति सूत्रेण मतुब्प्रत्यये विभक्तिकार्ये केशवान् इति। पुनश्च वप्रत्ययस्य अभावपक्षे अत इनिठनौ इति सूत्रेण इन्-



प्रत्ययः ठन्- प्रत्ययः च भवतः। ततः अनुबन्धलोपे विभक्तिकार्ये वर्णमेलनेन च केशी केशिकः इति रूपाणि भवन्ति।

## [२९.१२] अत इनिठनौ॥ (५.२.११५)

**सूत्रार्थः** - अदन्तात् प्रातिपदिकात् तदस्यास्त्यस्मिन्नित्यर्थे विकल्पेन तद्धितसंज्ञकः इनिठनौ प्रत्ययौ भवतः।

**सूत्रव्याख्या** -विधिसूत्रम् इदम् अस्ति। अस्मिन् सूत्रे पदद्वयम् अस्ति। अत इति पञ्चम्यन्तं पदम्। इनिश्च ठन् च इति इनिठनौ इति इतरेतरद्वन्द्वः। इनिठनौ इति प्रथमान्तं पदम्।

तद्धिताः, प्रत्ययः, परश्च, ङ्याप्प्रातिपदिकात्, समर्थानां प्रथमाद्वा इति एते अधिकाराः आगच्छन्ति। तदस्यास्त्यस्मिन्निति मतुप् इति सूत्रात् तद्, अस्य, अस्ति, अस्मिन् इति पदम् अनुवर्तते। प्राणिस्थादातो लजन्यतरस्याम् इत्यस्मात् अन्यतरस्याम् इति पदम् अनुवर्तते। अतः इति प्रातिपदिकस्य विशेषणम् अस्ति। अतः येन विधिस्तदन्तस्य इति सूत्रेण तदन्तविधौ अदन्तात् प्रातिपदिकात् इति अर्थः समागच्छति। अतः सूत्रार्थः भवति- अदन्तात् प्रातिपदिकात् तदस्यास्त्यस्मिन्नित्यर्थे विकल्पेन तद्धितसंज्ञकः इनिठनौ प्रत्ययौ भवतः। विकल्पग्रहणात् इनिठनोः अभावे मतुब्प्रत्ययो भवति।

**उदाहरणम्** - दण्डः अस्य अस्ति इति विग्रहे दण्ड इति अदन्तप्रातिपदिकत्वात् अत इनिठनौ इति इनिप्रत्ययः भवति। अयं समुदायः तद्धितान्तः। अतः प्रातिपदिकसंज्ञा सुलोपश्च भवति। ततः दण्ड+इन् इति स्थिते यस्येति च इति डकारोत्तरवर्तिनः अकारस्य लोपे दण्डिन् इति स्थितिः भवति। ततः विभक्तिकार्ये सौ च इति उपधादीर्घे सुलोपे पदान्तस्य नकारस्य लोपे दण्डी इति रूपम्।

दण्डः अस्य अस्ति इति विग्रहे दण्ड इति अदन्तप्रातिपदिकम्। अत इनिठनौ इति ठन्प्रत्ययः भवति। ततः अनुबन्धलोपे कृते दण्ड+ठ इति स्थितिः भवति। ततः अयं समुदायः तद्धितान्तः। अतः प्रातिपदिकसंज्ञा सुलोपश्च भवति। ततः दण्ड+ठ इति स्थिते ठस्येकः इति सूत्रेण इकादेशे दण्ड +इक इति स्थितिः। ततः यस्येति च इति डकारोत्तरवर्तिनः अकारस्य लोपे विभक्तिकार्ये दण्डिकः इति।

अत इनिठनौ इति सूत्रेण विकल्पेन इनिठनोः विधानात् इनिठन्प्रत्ययस्य अभावपक्षे मतुब्प्रत्ययः भवति। तदा दण्डवान् इति रूपम् अस्ति। दण्ड इति अदन्तप्रातिपदिकात् दण्डी, दण्डिकः, दण्डवान् इति रूपत्रयम् अस्ति। अतः अदन्तेभ्यः प्रातिपदिकेभ्यः मतुप्, इन्, ठन् प्रत्ययत्रयं भवति।

## [२९.१३] रूपादाहतप्रशंसयोर्यप्॥ (५.२.१२०)

**सूत्रार्थः** - आहतार्थे प्रशंसार्थे च वर्तमानात् प्रथमान्तात् रूपप्रातिपदिकात् तदस्यास्त्यस्मिन्निति इत्यर्थे तद्धितसज्ञकः यप् प्रत्ययः भवति।

**सूत्रव्याख्या** -इदम् अस्ति विधिसूत्रम्। अस्मिन् सूत्रे त्रीणि पदानि सन्ति। रूपादिति पञ्चम्यन्तं पदम्। आहतं च प्रशंसा च इति आहतप्रशंसे, तयोः आहतप्रशंसयोः इति इतरेतरद्वन्द्वः। आहतप्रशंसयोः इति सप्तम्यन्तं पदम्। यप् इति प्रथमान्तं पदम्।



तद्धिताः, प्रत्ययः, परश्च, ङ्याप्प्रातिपदिकात्, समर्थानां प्रथमाद्वा इति एते अधिकाराः आगच्छन्ति। तदस्यास्त्यस्मिन्निति मतुप् इति सूत्रात् तद्, अस्य, अस्ति, अस्मिन् इति पदम् अनुवर्तते। अतः सूत्रार्थः भवति - आहतार्थे प्रशंसार्थे च वर्तमानात् प्रथमान्तात् रूपप्रातिपदिकात् तदस्यास्त्यस्मिन्निति इत्यर्थे तद्धितसञ्ज्ञकः यप् प्रत्ययः भवति।

**उदाहरणम्** - आहतं रूपमस्य अस्तीति विग्रहे आहतार्थे विद्यमानात् रूप इति प्रथमान्तात् प्रातिपदिकात् मत्वर्थे रूपादाहतप्रशंसयोर्यप् इति सूत्रेण यप्-प्रत्ययः अनुबन्धलोपश्च भवतः। अयं समुदायः तद्धितान्तः। अतः प्रातिपदिकसंज्ञा सुपः लोपश्च भवतः। ततः रूप+य इति स्थिते यस्येति च अकारस्य लोपे पुनः एकदेशविकृतमनन्यवत् इति न्यायेन विभक्तिकार्ये रूप्यम् इति रूपम्। आहतं रूपमस्य अस्तीति रूप्यः कार्षायणः।

प्रशस्तं रूपमस्य अस्तीति विग्रहे प्रशंसार्थे विद्यमानात् रूप इति प्रथमान्तात् प्रातिपदिकात् मत्वर्थे रूपादाहतप्रशंसयोर्यप् इति सूत्रेण यपि अनुबन्धलोपे तद्धितान्तत्वात् प्रातिपदिकसंज्ञायां सुपः लोपे रूप+य इति स्थिते यस्येति च अकारस्य लोपे पुनः एकदेशविकृतमनन्यवत् इति न्यायेन विभक्तिकार्ये रूप्यम् इति रूपम्। प्रशस्तं रूपमस्य अस्तीति रूप्यो गौः।

## [२९.१४] व्रीह्यादिभ्यश्च॥ (५.२.११६)

**सूत्रार्थः** - व्रीह्यादिभ्यः प्रथमान्तेभ्यः प्रातिपदिकेभ्यः तदस्यास्त्यस्मिन् इत्यर्थे इनिठनौ प्रत्ययौ विकल्पेन भवतः।

**सूत्रव्याख्या** -विधिसूत्रम् इदम् अस्ति। अस्मिन् सूत्रे पदद्वयं तिष्ठति। व्रीहिः आदिर्येषां ते व्रीह्यादयः, तेभ्यः व्रीह्यादिभ्यः इति बहुव्रीहिसमासान्तं पदम्। च इति अव्ययपदम्।

तद्धिताः, प्रत्ययः, परश्च, ङ्याप्प्रातिपदिकात्, समर्थानां प्रथमाद्वा इति एते अधिकाराः आगच्छन्ति। तदस्यास्त्यस्मिन्निति मतुप् इति सूत्रात् तद्, अस्य, अस्ति, अस्मिन् इति पदम् अनुवर्तते। प्राणिस्थादातो लजन्यतरस्याम् इत्यस्मात् अन्यतरस्याम् इति पदम् अनुवर्तते। व्रीह्यादिभ्यः इत्यनेन साकं प्रथमान्तस्य प्रातिपदिकस्य च सम्बन्धवशात् वचनपरिवर्तनेन प्रथमान्तेभ्यः प्रातिपदिकेभ्यः इति अर्थः आयाति। अतः सूत्रार्थः भवति - व्रीह्यादिभ्यः प्रथमान्तेभ्यः प्रातिपदिकेभ्यः तदस्यास्त्यस्मिन् इत्यर्थे इनिठनौ प्रत्ययौ विकल्पेन भवतः। अपरस्मिन् पक्षे मतुब्प्रत्ययो विधीयते। चकारेण मतुब्प्रत्ययस्य संग्रहणं क्रियते।

**उदाहरणम्** - व्रीहयः सन्त्यस्मिन्निति विग्रहे व्रीहिप्रातिपदिकात् व्रीह्यादिभ्यश्च इति सूत्रेण इनिप्रत्ययः ठन्प्रत्ययः च भवति। इनिप्रत्ययपक्षे अनुबन्धलोपे इनिप्रत्ययस्य तद्धितान्तत्वात् प्रातिपदिकसंज्ञा सुलोपश्च भवति। यस्येति च इकारस्य लोपे विभक्तिकार्ये व्रीही इति रूपम्।

ठन्प्रत्ययपक्षे तु व्रीहिप्रातिपदिकात् प्रकृतशास्त्रेण ठन्प्रत्ययः भवति। ततः अनुबन्धलोपे प्रातिपदिकसंज्ञा सुलोपश्च भवति। ततः ठस्येकः इति शास्त्रेण ठकारस्य इकादेशः भवति। ततः यस्येति



च इति शास्त्रेण इकारलोपे व्रीहिकः इति रूपम्। चकारेण मतुब्प्रत्ययस्य संग्रहणात् मतुपि व्रीहिमान् इति रूपम्।



## पाठगतप्रश्नाः-३

१३. ऊषसुषिमुष्कमधोः कः प्रत्ययः भवति।

१४. मधुरः इत्यत्र लौकिकविग्रहः कः।

१५. केशवः इत्यत्र केन सूत्रेण कः प्रत्ययः।

१६. अदन्तात् प्रातिपदिकात् कः प्रत्ययः भवति।

१७. आहतप्रशंसयोः इत्यत्र का विभक्तिः।

१८. व्रीह्यादिभ्यः के प्रत्ययाः भवन्ति।

## [२९.१५] अस्मायामेधास्रजो विनिः॥ (५.२.१२१)

**सूत्रार्थः** - असन्ताद् माया–मेधा–स्रज् इत्येतेभ्यः प्रथमान्तेभ्यः प्रातिपदिकेभ्यः तदस्यास्त्यस्मिन्नित्यर्थे तद्धितसंज्ञकः विनिः प्रत्ययः विकल्पेन भवति।

**सूत्रव्याख्या** -विधिसूत्रम् इदम् अस्ति। अस्मिन् सूत्रे पदद्वयम् अस्ति। अस् च माया च मेधा च स्रक् च इति अस्मायामेधास्रज्, तस्मात् अस्मायामेधास्रजः इति समाहारद्वन्द्वः। अस्मायामेधास्रजः इति पञ्चम्यन्तं पदम्। विनिः इति प्रथमान्तं पदम्।

तद्धिताः, प्रत्ययः, परश्च, ङ्याप्प्रातिपदिकात्, समर्थानां प्रथमाद्वा इति एते अधिकाराः आगच्छन्ति। तदस्यास्त्यस्मिन्निति मतुप् इति सूत्रात् तद्, अस्य, अस्ति, अस्मिन् इति पदम् अनुवर्तते। प्राणिस्थादातो लजन्यतरस्याम् इत्यस्मात् अन्यतरस्याम् इति पदम् अनुवर्तते। अस् इति प्रातिपदिकस्य विशेषणम्। अत येन विधिस्तदन्तस्य इति सूत्रेण असन्तं प्रातिपदिकम् इति लभ्यते। अतः सूत्रार्थः भवति - असन्ताद् माया-मेधा-स्रज् इत्येतेभ्यः प्रथमान्तेभ्यः प्रातिपदिकेभ्यः तदस्यास्त्यस्मिन्नित्यर्थे तद्धितसंज्ञकः विनिः प्रत्ययः विकल्पेन भवति। अन्यतरस्याम् इति पदस्य ग्रहणात् विनिप्रत्ययाभावपक्षे मतुब्प्रत्ययो भवति।

**उदाहरणम्** - यशः अस्य अस्ति इति विग्रहे यशस् इति असन्तप्रातिपदिकम्। अतः अस्मायामेधास्रजो विनिः इति शास्त्रेण विनिप्रत्ययः भवति। ततः अनुबन्धलोपे यशस्+विन् इति स्थितिः भवति। अयं समुदायः तद्धितान्तः। अतः प्रातिपदिकसंज्ञा सुलोपश्च भवति। ततः यशस्विन् इति जाते एकदेशविकृतमनन्यवत् इति न्यायेन प्रातिपदिकसंज्ञा भवति। ततः सुप्रत्ययः भवति। ततः सौ च इति शास्त्रेण उपधादीर्घः भवति। ततः अपृक्तस्य सकारस्य पदान्तस्य नकारस्य लोपे च वर्णमेलनेन यशस्वी इति। विनिप्रत्ययस्य अभावपक्षे मतुब्प्रत्यये जाते यशस्वान् इति रूपम्। एवमेव मायामेधास्रज् इति

प्रातिपदिकेभ्यः विनिप्रत्यये कृते मायावी, मेधावी, स्रग्वी इति रूपाणि। विनिप्रत्ययस्य अभावपक्षे तु मतुब्प्रत्यये सति मायावान्, मेधावान्, स्रग्वान् इति।

## [२९.१६] वाचो ग्मिनिः॥ (५.२.१२४)

**सूत्रार्थः** - प्रथमान्ताद् वाच् इति प्रातिपदिकात् तदस्यास्त्यस्मिन्नित्यर्थे तद्धितसंज्ञकः ग्मिनिः प्रत्ययः स्यात्।

**सूत्रव्याख्या** -विधिसूत्रम् इदम् अस्ति। अस्मिन् सूत्रे पदद्वयम् अस्ति। वाचः इति पञ्चम्यन्तं पदम्। ग्मिनिः इति प्रथमान्तं पदम्।

तद्धिताः, प्रत्ययः, परश्च, ङ्याप्प्रातिपदिकात्, समर्थानां प्रथमाद्वा इति एते अधिकाराः आगच्छन्ति। तदस्यास्त्यस्मिन्निति मतुप् इति सूत्रात् तद्, अस्य, अस्ति, अस्मिन् इति पदम् अनुवर्तते। अतः सूत्रार्थः भवति – प्रथमान्ताद् वाच् इति प्रातिपदिकात् तदस्यास्त्यस्मिन्नित्यर्थे तद्धितसंज्ञकः ग्मिनिः प्रत्ययः स्यात्।

**उदाहरणम्** - प्रशस्ता वाग् अस्य अस्ति इति विग्रहे प्रथमान्तात् वाच् इति प्रातिपदिकात् तदस्य अस्ति इत्यर्थे वाचो ग्मिनि इति सूत्रेण ग्मिनिप्रत्ययः भवति। ततः अनुबन्धलोपे तद्धितान्तत्वात् प्रातिपदिकसंज्ञायां सुपः लोपे वाच् + ग्मिन् इति स्थितिः भवति। ततः स्वादिष्वसर्वनामस्थाने इति सूत्रेण पदसंज्ञा भवति। ततः चोः कुः इति पदान्तस्य चकारस्य ककारः भवति। ततः झलां जशोऽन्ते इति सूत्रेण ककारस्य गकारः भवति। ततः प्रातिपदिकसंज्ञायां विभक्तिकार्ये वर्णमेलनेन वाग्ग्मी इति रूपम्।

## [२९.१७] आलजाटचौ बहुभाषिणि॥ (५.२.१२५)

**सूत्रार्थः** - बहुभाषिणि अर्थे प्रथमान्ताद् वाच् इति प्रातिपदिकात् तदस्यास्त्यस्मिन्नित्यर्थे तद्धितसंज्ञकौ आलजाटचौ प्रत्ययौ स्तः।

**सूत्रव्याख्या** -विधिसूत्रम् इदम् अस्ति। अस्मिन् सूत्रे पदे द्वे स्तः। आलच् च् आटच् च इति आलजाटचौ इति इतरेतरद्वन्द्वः। आलजाटचौ इति प्रथमान्तं पदम्। बहुभाषिणि इति सप्तम्यन्तं पदम्।

तद्धिताः, प्रत्ययः, परश्च, ङ्याप्प्रातिपदिकात्, समर्थानां प्रथमाद्वा इति एते अधिकाराः आगच्छन्ति। तदस्यास्त्यस्मिन्निति मतुप् इति सूत्रात् तद्, अस्य, अस्ति, अस्मिन् इति पदम् अनुवर्तते। वाचो ग्मिनिः इत्यस्मात् सूत्रात् वाचः इति पदम् अनुवर्तते। अतः सूत्रार्थो भवति – बहुभाषिणि अर्थे प्रथमान्ताद् वाच् इति प्रातिपदिकात् तदस्यास्त्यस्मिन्नित्यर्थे तद्धितसंज्ञकौ आलजाटचौ प्रत्ययौ स्तः। वार्तिककारस्य मतेन कुत्सिते इति वक्तव्यम्। तेन यः जनः कुत्सितं बहु भाषते तस्य कृते वाचालः, वाचाटः इति प्रयोगो भवति। यस्तु बहु भाषते किन्तु सम्यग् भाषते। तस्य कृते वाग्ग्मी इति प्रयोगः भवति।

**उदाहरणम्** - कुत्सितं बहु भाषते इति विग्रहे प्रथमान्तात् वाच् इति प्रातिपदिकात् मत्वर्थे बहुभाषिणि अर्थे च आलजाटचौ बहुभाषिणि इति सूत्रेण आलजाटचौ भवतः। आलच्प्रत्ययपक्षे



अनुबन्धलोपे वाच्+आल इति स्थितिः भवति। अयं समुदायः तद्धितान्तः। अतः प्रातिपदिकसंज्ञा सुपः लोपश्च भवति। ततः प्रातिपदिकसंज्ञायां विभक्तिकार्ये वर्णमेलनेन वाचालः इति रूपम्

आटच्प्रत्ययपक्षे अनुबन्धलोपे वाच्+आट इति स्थितिः भवति। अयं समुदायः तद्धितान्तः। अतः प्रातिपदिकसंज्ञा सुपः लोपश्च भवति। ततः प्रातिपदिकसंज्ञायां विभक्तिकार्ये वर्णमेलनेन विभक्तिकार्ये वाचाटः इति रूपम्।

## [२९.१८] अर्शआदिभ्योऽच्॥ (५.२.१२७)

**सूत्रार्थः** - अर्शआदिभ्यः प्रथमान्तेभ्यः प्रातिपदिकेभ्यः तदस्यास्त्यस्मिन्नित्यर्थे तद्धितसंज्ञकः अच्प्रत्ययो भवति।

**सूत्रव्याख्या** -अनेन सूत्रेण अच् विधीयते। तस्मात् विधिसूत्रम् इदम् अस्ति। अस्मिन् सूत्रे पदद्वयम् अस्ति। अर्शस् आदिर्येषां ते अर्शादयस्तेभ्यः अर्शादिभ्यः इति बहुव्रीहिसमासः। अर्शआदिभ्यः इति पञ्चम्यन्तं पदम् अस्ति। अच् इति प्रथमान्तं पदम्।

तद्धिताः, प्रत्ययः, परश्च, ङ्याप्प्रातिपदिकात्, समर्थानां प्रथमाद्वा इति एते अधिकाराः आगच्छन्ति। तदस्यास्त्यस्मिन्निति मतुप् इति सूत्रात् तद्, अस्य, अस्ति, अस्मिन् इति पदम् अनुवर्तते। अतः सूत्रार्थः भवति- अर्शआदिभ्यः प्रथमान्तेभ्यः प्रातिपदिकेभ्यः तदस्यास्त्यस्मिन्नित्यर्थे तद्धितसंज्ञकः अच्प्रत्ययो भवति। आकृतिगणः अयम्। अर्थात् येषां शब्दानां अर्शआदिगणे पाठो नास्ति, तथापि अर्शादिगणे पठितशब्दवत् रूपं दृश्यते। अतः अर्शआदिगणः आकृतिगणः इति स्वीकारात् प्रकृतसूत्रेण अच् प्रत्ययो भवति।

**उदाहरणम्** - अर्शांसि विद्यन्ते यस्य इति विग्रहे अर्शआदिगणे पठितस्य अर्शस् इति शब्दस्य अर्शआदिभ्योऽच् इति सूत्रेण अच्-प्रत्ययः भवति। ततः अनुबन्धलोपे तद्धितान्तस्य प्रातिपदिकसंज्ञा सुलोपश्च भवति। ततः अर्शस् + अ इति स्थिते एकदेशविकृतमनन्यवत् इति न्यायेन ततः प्रातिपदिकसंज्ञायां विभक्तिकार्ये वर्णमेलनेन अर्शसः इति रूपं भवति।

## [२९.१९] सुखादिभ्यश्च॥ (५.२.१३१)

**सूत्रार्थः** - सुखादिगणपठितेभ्यः प्रथमान्तेभ्यः प्रातिपदिकेभ्यः तदस्यास्त्यस्मिन्नित्यर्थे तद्धितसंज्ञकः इनिः प्रत्ययो भवति इति।

**सूत्रव्याख्या** -प्रकृतसूत्रेण इनिः प्रत्ययः विधीयते। तस्मात् विधिसूत्रम् इदम् अस्ति। अस्मिन् सूत्रे पदद्वयम् अस्ति। सुखम् आदिर्येषां ते सुखादयः, तेभ्यः सुखादिभ्यः इति बहुव्रीहिसमासान्तं पदम्। सुखादिभ्यः इति पञ्चम्यन्तं पदम्। च इति अव्ययपदम्।

तद्धिताः, प्रत्ययः, परश्च, ङ्याप्प्रातिपदिकात्, समर्थानां प्रथमाद्वा इति एते अधिकाराः आगच्छन्ति। तदस्यास्त्यस्मिन्निति मतुप् इति सूत्रात् तद्, अस्य, अस्ति, अस्मिन् इति पदम् अनुवर्तते। द्वन्द्वोपतापगर्ह्यात् प्राणिस्थादिनिः इति सूत्रात् इनिः अनुवर्तते। अतः सूत्रार्थः भवति-

सुखादिगणपठितेभ्यः प्रथमान्तेभ्यः प्रातिपदिकेभ्यः तदस्यास्त्यस्मिन्नित्यर्थे तद्धितसंज्ञकः इनिः प्रत्ययो भवति इति।

**शङ्का-** सुखादिप्रातिपदिकम् अदन्तम् अस्ति। अतः अदन्तत्वात् अत इनिठनौ इति सूत्रेण इनिप्रत्ययः सम्भवति। तर्हि सुखादिभ्यश्च इति शास्त्रम् किमर्थम् कृतम् वर्तते।

**समाधानम्** - अत इनिठनौ इति सूत्रेण अदन्तात् प्रातिपदिकात् इनिप्रत्ययः ठन्प्रत्ययश्च विधीयते। सुखादिप्रातिपदिकेभ्यः केवलम् इनिप्रत्ययः भवतु इति चिन्तयित्वा प्रकृतशास्त्रमिदम्। एतेन अदन्तप्रातिपदिकेभ्यः इनिप्रत्यये ठन्प्रत्यये च प्राप्ते सुखादिभ्यः इति सूत्रेण केवलम् इनिप्रत्ययो भवति न तु ठन्प्रत्ययः।

**उदाहरणम्** - सुखम् अस्य अस्ति इति विग्रहे सुखादिगणे पठितं सुख इति प्रातिपदिकम्। अतः सुखादिभ्यश्च इति सूत्रेण इनिप्रत्ययः भवति। ततः अनुबन्धलोपे च जाते तद्धितान्तत्वात् प्रातिपदिकसंज्ञायां सुपः लोपे सुख + इन् इति स्थितिः जायते। एकदेशविकृतमनन्यवत् इति न्यायेन ततः प्रातिपदिकसंज्ञायां विभक्तिकार्ये सुखी इति रूपम्।

## [२९.२०] धर्मशीलवर्णान्ताच्च॥ (५.२.१३२)

**सूत्रार्थः** - प्रथमान्तेभ्यः धर्मशीलवर्णान्तेभ्यः प्रातिपदिकेभ्यः तदस्यास्त्यस्मिन्नित्यर्थे तद्धितसंज्ञकः इनिप्रत्ययः स्यात्।

**सूत्रव्याख्या** -विधिसूत्रम् इदम् अस्ति। अस्मिन् सूत्रे पदद्वयम् अस्ति। धर्मश्च शीलञ्च वर्णश्च धर्मशीलवर्णास्ते अन्ते यस्य स धर्मशीलवर्णान्तः, तस्मात् धर्मशीलवर्णान्तात् इति द्वन्द्वगर्भबहुव्रीहिसमासान्तं पदम्। धर्मशीलवर्णान्तात् इति पञ्चम्यन्तं पदम्। चेति अव्ययपदम्।

तद्धिताः, प्रत्ययः, परश्च, ङ्याप्प्रातिपदिकात्, समर्थानां प्रथमाद्वा इति एते अधिकाराः आगच्छन्ति। तदस्यास्त्यस्मिन्निति मतुप् इति सूत्रात् तद्, अस्य, अस्ति, अस्मिन् इति पदम् अनुवर्तते। द्वन्द्वोपतापगर्ह्यात् प्राणिस्थादिनिः इति सूत्रात् इनिः अनुवर्तते। अतः सूत्रार्थः भवति - प्रथमान्तेभ्यः धर्मशीलवर्णान्तेभ्यः प्रातिपदिकेभ्यः तदस्यास्त्यस्मिन्नित्यर्थे तद्धितसंज्ञकः इनिप्रत्ययः स्यात्।

**उदाहरणम्** - ब्राह्मणधर्मः अस्य अस्ति इति विग्रहे ब्राह्मणधर्म इति प्रातिपदिकं धर्मशब्दान्तम् अस्ति। अतः धर्मशीलवर्णान्ताच्च इति शास्त्रेण इनिप्रत्ययः भवति। ततः अनुबन्धलोपे तद्धितान्तस्य प्रातिपदिकसंज्ञायां सुलोपे ब्राह्मणधर्म + इन् इति स्थितिः जायते। ततः यस्येति च इति मकारोत्तरस्य अकारस्य लोपे विभक्तिकार्ये ब्राह्मणधर्मी इति रूपम्। एवमेव शीलान्तशब्दानां वर्णान्तशब्दानां धर्मशीलवर्णान्ताच्च इति सूत्रेण इनिप्रत्यये जाते ब्राह्मणशीली, ब्राह्मणधर्मी इत्यादीनि रूपाणि।

## [२९.२१] अहंशुभमोर्युस्॥ (५.२.१४०)

**सूत्रार्थः** - अहम्, शुभम् इत्येताभ्यामव्ययाभ्यां तदस्यास्त्यस्मिन्नित्यर्थे तद्धितसंज्ञकः युस्प्रत्ययो भवति।



**सूत्रव्याख्या** -विधिसूत्रम् इदम् अस्ति। अहं च शुभं च इति अहंशुभमौ, तयोः अहंशुभयोः इति इतरेतरद्वन्द्वः। अहंशुभयोः इति षष्ठ्यन्तं पदम्। परन्तु अस्मिन् सूत्रे पञ्चम्यर्थे षष्ठीप्रयोगः भवति। युस् इति प्रथमान्तं पदम्।

तद्धिताः, प्रत्ययः, परश्च, ङ्याप्प्रातिपदिकात्, समर्थानां प्रथमाद्वा इति एते अधिकाराः आगच्छन्ति। तदस्यास्त्यस्मिन्निति मतुप् इति सूत्रात् तद्, अस्य, अस्ति, अस्मिन् इति पदम् अनुवर्तते। अहंशुभम् इत्येतद्द्वयं विभक्तिप्रतिरूपम् अव्ययम् अस्ति। अतः सूत्रार्थः भवति - अहम्, शुभम् इत्येताभ्यामव्ययाभ्यां तदस्यास्त्यस्मिन्नित्यर्थे तद्धितसंज्ञकः युस्प्रत्ययो भवति।

**उदाहरणम्** - अहम् अस्य अस्ति इति विग्रहे अहम् इति मकारान्तम् अव्ययम्। अतः अहंशुभमोर्युस् इति सूत्रेण युस्-प्रत्ययः भवति। ततः अनुबन्धलोपे जाते अहम् + यु इति स्थितिः भवति। अयं समुदायः तद्धितान्तः। अतः प्रातिपदिकसंज्ञा सुलोपश्च भवति। ततः यचि भम् इति सूत्रेण भसंज्ञा प्राप्नोति। ततः सिति च इति सूत्रेण भसंज्ञां प्रबाध्य पदसंज्ञा विधीयते। अहम् इत्यस्य मकारस्य पदान्तत्वात् मोऽनुस्वारः इति सूत्रेण अनुस्वारे वा पदान्तस्य इति शास्त्रेण अनुस्वारस्य वैकल्पिकपरसवर्णे जाते अहँय्युः, अहंयुः इति रूपद्वयम् भवति।

एवमेव शुभम् अस्य अस्ति इति विग्रहे शुभम् इति मकारान्तम् अव्ययत्वम्। अतः अहंशुभमोर्युस् इति सूत्रेण युस्-प्रत्ययः भवति। ततः अनुबन्धलोपे जाते शुभम् + यु इति स्थितिः जायते। अयं समुदायः तद्धितान्तः। अतः प्रातिपदिकसंज्ञा सुलोपश्च भवति। ततः यचि भम् इति सूत्रेण भसंज्ञा प्राप्नोति। ततः सिति च इति सूत्रेण भसंज्ञां प्रबाध्य पदसंज्ञा विधीयते। शुभम् इत्यस्य मकारस्य पदान्तत्वात् मोऽनुस्वारः इति सूत्रेण अनुस्वारे वा पदान्तस्य इति शास्त्रेण अनुस्वारस्य वैकल्पिकपरसवर्णे जाते शुभँय्युः, शुभंयुः इति रूपद्वयम् भवति।



## पाठगतप्रश्नाः-४

१९. विनिप्रत्ययविधायकं सूत्रं किम्।

२०. वाग्मी इत्यत्र केन सूत्रेण कः प्रत्ययः।

२१. वाचालः नाम कः।

२२. अर्शादिभ्यः कः प्रत्ययः भवति।

२३. सुखी इत्यत्र केन सूत्रेण कः प्रत्ययः।

२४. अहंशुभमोर्युस् इत्यस्य सूत्रार्थः कः।



## पाठसारः

तद्धिताः इत्यधिकारे बहवः प्रत्ययाः विधीयन्ते। तेषु मतुब्प्रत्ययोऽपि कश्चित् तद्धितप्रत्ययः भवति। प्रायः तद् अस्य अस्ति उत तद् अस्मिन् अस्ति इत्यर्थे मतुब्प्रत्ययाः विधीयन्ते। अस्मिन् अर्थे एव मतुप्, इनि, ठन्, यप्, विनि, अच्, आटच्, आलच्, युस् एते प्रत्ययाः विधीयन्ते। यथा– रसः अस्य अस्मिन् वा अस्ति इत्यर्थे रसवान् इति रूपम् भवति। एवञ्च तद् अस्य अस्मिन् वा अस्ति इत्यर्थे न केवलं मतुब्प्रत्ययो भवति अपि तु लच्, अच्, इनि,ठन् इति एते प्रत्ययाः अपि भवन्ति। परन्तु मतुब्प्रत्ययस्य आधिक्येन प्राथम्येन च प्रयोगात् मतुबर्थीयप्रकरणम् इति। अस्मिन् प्रकरणे गुणवचनेभ्यः प्रातिपदिकेभ्यः तदस्य अस्मिन् वा अस्ति इति अर्थे ये मतुब्प्रत्ययाः विधीयन्ते। तेषां गुणवचनेभ्यो मतुबो लुगिष्ट इति मतुब्प्रत्ययानां लुग् भवति। यथा शुक्लः इति। पुनश्च ग्मिनि, आलच्, आटच् इत्यादयः अपि प्रत्ययाः सम्भवन्ति। यथा वाक् अस्य अस्ति इत्यर्थे ग्मिनि–प्रत्यये वाग्मी इति रूपम्। कुत्सितं बहु भाषते इति विग्रहे आलच्–प्रत्यये आटच्–प्रत्यये च वाचालः, वाचाटः इत्यादीनि रूपाणि भवन्ति। एवञ्च अहं शुभं इति एताभ्याम् अव्ययाभ्यां युस्–प्रत्ययः भवति। एतान् सर्वान् प्रत्ययान् स्वीकृत्य मतुबर्थीयप्रकरणम् इति।



## पाठान्तप्रश्नाः

१. तदस्यास्त्यस्मिन्निति मतुप् इति सूत्रं व्याख्यात।
२. गोमान् इति रूपं साधयत।
३. प्राणिस्थादातो लजन्यतरस्याम् इति सूत्रं व्याख्यात।
४. लोमशः इति रूपं साधयत।
५. लोमादिपामादिपिच्छादिभ्यः शनेलचः इति सूत्रं व्याख्यात।
६. अत इनिठनौ इति सूत्रं व्याख्यात।
७. दण्डी इति रूपं साधयत।
८. वाचो ग्मिनिः इति सूत्रं व्याख्यात।
९. सुखी इति रूपं साधयत।
१०. आलजाटचौ बहुभाषिणि इति सूत्रं व्याख्यात।
११. सुखादिभ्यश्च इति सूत्रं व्याख्यात।
१२. अहंशुभमोर्युस् इति सूत्रं व्याख्यात।
१३. अस्मायामेधास्रजो विनिः इति सूत्रं व्याख्यात।



१४. मादुपधायाश्च मतोर्वोऽयवादिभ्यः इति सूत्रं व्याख्यात।

१५. तसौ मत्वर्थे इति सूत्रं व्याख्यात।



## पाठगतप्रश्नानामुत्तराणि

उपरि विद्यमानानां पाठगतप्रश्नानाम् उत्तराणि प्रदीयन्ते।

**उत्तराणि-१**

१. तदस्यास्त्यस्मिन्निति मतुप् इति सूत्रम्।

२. तदस्यास्त्यस्मिन्निति मतुप् इति सूत्रेण मतुब्प्रत्ययः।

३. कालविवक्षा अस्ति।

४. तद् अस्य अस्ति इत्यर्थे तद् अस्मिन् अस्ति इत्यर्थे वा रसादिगणे पठितात् प्रातिपदिकात् मतुब्प्रत्ययः भवति।

५. मकारस्य वकारविधानम्।

६. भसंज्ञा भवति।

**उत्तराणि-२**

७. प्राणिस्थवाचकात् प्रथमान्तात् अदन्तात् प्रातिपदिकात् तदस्यास्त्यस्मिन्निति अर्थे विकल्पेन तद्धितसंज्ञकः लच्-प्रत्ययः भवति।

८. विधिसूत्रम्।

९. शनेलचः।

१०. प्रज्ञाश्राद्धार्चाभ्यः णः इति सूत्रेण णप्रत्ययः।

११. उरच्-प्रत्ययः।

१२. इतरेतरद्वन्द्वः।

**उत्तराणि-३**

१३. रप्रत्ययः।

१४. मधु अस्य अस्ति इति विग्रहः।

१५. केशाद्वोऽन्यतरस्याम् इति सूत्रेण वप्रत्ययः।

१६. इनिठनौ।

१७. सप्तमी विभक्तिः।

१८. इनिठनौ मतुप् च।

**उत्तराणि-४**

१९. अस्मायामेधास्रजो विनिः।



२०. वाचो ग्मिनिः इति सूत्रेण ग्मिनि-प्रत्ययः।

२१. कुत्सितं बहु भाषते यः।

२२. अच्-प्रत्ययः।

२३. सुखादिभ्यश्च इति सूत्रेण इनि-प्रत्ययः।

२४. अहम्, शुभम् इत्येताभ्यामव्ययाभ्यां तदस्यास्त्यस्मिन्नित्यर्थे तद्धितसंज्ञकः युस्प्रत्ययो भवति।

॥इति नवविंशः पाठः ॥



३०

# अथ रक्ताद्यर्थकप्रकरणम्

## प्रस्तावना

तद्धिताधिकारे बहुविधानि सूत्राणि पठितानि सन्ति इति भवन्तः पूर्वं ज्ञातवन्तः। तेषाञ्च सूत्राणां नानाविधप्रकरणेषु व्याख्यानमस्ति। तद् भवन्तः लघुसिद्धान्तकौमुद्यादिग्रन्थेषु द्रष्टुम् अर्हन्ति। अत्र तु तेषां व्याख्यानार्थं पाठचतुष्टयं परिकल्पितमस्ति। पूर्वतनपाठद्वये अपत्याधिकारप्रकरणस्थानां मत्वर्थीयप्रकरणस्थानां च सूत्राणां परिचयं प्राप्तवन्तः। अवशिष्टप्रकरणस्थसूत्राणां कृते पाठद्वयं कल्पितम् अस्ति। तयोरादिमे रक्ताद्यर्थकप्रकरणाख्यपाठे अर्थात् अस्मिन् (तृतीये) पाठे रक्ताद्यर्थकप्रकरणतः यदधिकारप्रकरणं यावत् आलोचना विद्यते। तद्धिताः, समर्थानां प्रथमाद्वा, प्रत्ययः, परश्च इति एते तद्धितप्रत्ययविधायकसूत्रेषु अधिक्रियन्ते।



## उद्देश्यानि

अमुं पाठं पठित्वा भवताम्/भवतीनाम् –

- सरलतया रक्ताद्यर्थकप्रत्ययानां ज्ञानं भविष्यति।
- रक्ताद्यर्थकप्रकरणादीनां सूत्राणाम् अर्थज्ञानं भविष्यति।
- लौकिकालौकिकविग्रहाणां परिचयो भविष्यति।
- रक्ताद्यर्थकप्रकरणादीनां सूत्राणाम् उदाहरणानां ज्ञानं भविष्यति।
- तद्धितप्रत्ययस्य प्रयोगविषये सहजतया ज्ञानं भविष्यति।
- सर्वोपरि तद्धितान्तपदस्य प्रयोगः क्व कथञ्च कर्तव्य इति विवेको भविष्यति।

## [३०.१] तेन रक्तं रागात्॥ (४.२.१)

**सूत्रार्थः** – रज्यते अनेन इत्यर्थे तृतीयान्तात् रङ्गवाचकात् समर्थप्रातिपदिकात् तद्धितसंज्ञकः अण्प्रत्ययः परो भवति।

**सूत्रव्याख्या** – विधिसूत्रमिदमस्ति। अस्मिन् सूत्रे त्रीणि पदानि सन्ति। तेन इति तृतीयान्तानुकरणं लुप्तपञ्चम्यन्तम्। अर्थात् कषायेण युक्तम् इत्यादौ कषायेण इत्यादेः अनुकरणं तेन इत्यनेन क्रियते। रक्तमिति प्रथमैकवचनान्तम्, रागात् इति पञ्चम्येकवचनान्तम्। प्राग्दीव्यतोऽण् इत्यस्मात् प्राग् इति अनुवर्तते। सूत्रेऽस्मिन् प्रथमोच्चारितं सुबन्तं पदं तेन इति तृतीयान्तम्। अतः समर्थपदेषु यत् तृतीयान्तं पदं भवति तदेव अस्मिन्नर्थे विधीयमानस्य प्रत्ययस्य प्रकृतिः भविष्यति। रागात् इति प्रातिपदिकात् इत्यस्य विशेष्यस्य विशेषणमस्ति। रज्यते अनेन इति रागः अर्थात् येन द्रव्येण रञ्जनं भवति



स राग इत्युच्यते। यथा नीलपीतकषायादि रञ्जकद्रव्यं राग इत्युच्यते। एवं च सूत्रार्थस्तावत्–समर्थानां मध्ये यत् प्रथमं तृतीयान्तसमर्थं रागवाचि प्रातिपदिकं तस्मात् रक्तम् इत्येतस्मिन्नर्थे अणादयः स्युः इति सूत्रार्थः सिध्यति।

**विशेषः** – भवन्तः पूर्वम् अपत्याधिकारप्रकरणे समर्थविभक्तिः षष्ठी अस्ति इति दृष्टवन्तः। रक्तार्थे तृतीयाविभक्तिः समर्था भवति इति तु अधुना ज्ञातवन्तः। समर्थविभक्तीनां निर्देशार्थं सूत्रकारः प्रायः तत्तत्सूत्रेषु तद्–शब्दं प्रयुङ्क्ते। यथा प्रथमार्थं सः, सा, तद्। द्वितायार्थं तम्। तृतीयार्थं तेन। चतुर्थ्यर्थं तस्मै। पञ्चम्यर्थं तस्मात्। षष्ठ्यर्थं तस्य। सप्तम्यर्थं तस्मिन्। सूत्रनिर्दिष्टं विभक्त्यनुसारं प्रातिपदिकेऽपि तत्तद्विभक्तिः अर्थात् सु–अम्–टा–ङे–ङसि–ङस्–ङि इति विभक्तिः भवति। किञ्च आवश्यके सति द्विवचनं बहुवचनं वा प्रातिपदिकात् प्रयुज्य लौकिकालौकिकविग्रहादिः करणीयः। ततः प्रातिपदिकात् तद्धितप्रत्यये विहिते सति कृत्तद्धितसमासाश्च इत्यनेन प्रातिपदिकसंज्ञायां सुपो धातुप्रातिपदिकयोः इत्येनन अन्तर्वर्तिनीविभक्तेः लुक् भवति। ततः आदिवृद्धिः प्राप्तास्ति चेत् भवति। ततः भसंज्ञकवर्णस्य लोपः। पुनः एकेदशविकृतन्यायेन पूर्वकृतं प्रातिपदिकत्वम् अक्षुण्णं भवति इति मत्वा स्वादिविभक्तिर्भवति। ततः एकवचनविवक्षायां सुप्रत्यये प्रथमान्तरूपं दर्शितमस्ति। प्रत्ययेषु प्रायः कश्चित् अनुबन्धः भवति। तस्य च आदिवृद्ध्यादिप्रयोजनमपि भवति। पुनः प्रत्ययस्य स्थाने कदाचित् आदेशोऽपि विधीयते इति सर्वं ध्येयम्।

**उदाहरणम्** – कषायेण रक्तं वस्त्रं काषायणम्। कषायेण रक्तम् इत्यर्थे कषाय टा इति रागवाचकतृतीयान्तात् सुबन्तात् प्रकृतसूत्रेण अण्प्रत्यये अनुबन्धलोपे च कषाय टा अ इति जाते समुदायस्य तद्धितान्तत्वात् कृत्तद्धितसमासाश्च इत्यनेन प्रातिपदिकसंज्ञायां सुपो धातुप्रातिपदिकयोः इत्यनेन सुपः (टा–विभक्तेः) लुकि कषाय अ इति जाते अणः णित्त्वात् तद्धितेष्वचामादेः इत्यनेन आदिवृद्धौ काषाय अ इति जायते। ततः यचि भम् इत्यनेन भसंज्ञकत्वात् यस्येति च इत्यनेन तस्य लोपे काषाय् अ इति जाते एकदेशविकृतन्यायेन प्रातिपदिकत्वात् सु–विभक्तौ (वस्त्रम् इति विशेष्यानुसारं) नपुंसकलिङ्गकत्वात् सोरमादेशे पूर्वरूपैकादेशे अकारे काषायम् इति रूपं सिध्यति। पुंल्लिङ्गे काषायः, स्त्रीलिङ्गे काषायी इति रूपं भवति। एवमेव माञ्जिष्ठम्,माञ्जिष्ठः, माञ्जिष्ठी इत्यादीनि रूपाणि सिध्यन्ति।

## [३०.२] नक्षत्रेण युक्तः कालः॥ (४.२.३)

**सूत्रार्थः** – नक्षत्रवाचकात् तृतीयान्तात् समर्थप्रातिपदिकात् तेन युक्तमित्यर्थे तद्धितसंज्ञकः अण्प्रत्ययो भवति नक्षत्रयुक्तकालार्थे गम्यमाने।

**सूत्रव्याख्या** – विधिसूत्रम् इदम् अस्ति। अस्मिन् सूत्रे पदत्रयम् अस्ति। नक्षत्रेण इति तृतीयान्तानुकरणं लुप्तपञ्चम्यन्तम्। अर्थात् पुष्येण युक्तः इत्यादौ पुष्येण इत्यादेः अनुकरणं नक्षत्रेण इत्यनेन क्रियते। युक्तः, कालः इत्युभौ अपि प्रथमैकवचनान्तम्। प्राग्दीव्यतोऽण् इत्यस्मात् अण् इति अनुवर्तते। तेन रक्तं रागात् इत्यतः तेन इति पदमनुवर्तते, तच्च लुप्तपञ्चम्यन्तं तृतीयान्तानुकरणम्। प्रत्ययः, परश्च, ङ्याप्प्रातिपदिकात्, तद्धिताः, समर्थानां प्रथमाद्वा इति एते अधिक्रियन्ते। प्रत्ययः इत्यस्य विशेषणमस्ति तद्धितः, परः इति। अतः सूत्रेण यः प्रत्ययो विधीयते स तद्धितसंज्ञकः परश्च



भवति। तद्धितप्रत्ययः प्रातिपदिकात् विधीयते इति स्मर्तव्यम्। प्रातिपदिकस्य विशेषणमस्ति समर्थम् इति। सूत्रे नक्षत्रशब्देन नक्षत्रयुक्तचन्द्रमसः बोधो भवति। एवञ्च नक्षत्रवाचकात् तृतीयान्तात् समर्थप्रातिपदिकात् तेन युक्तमित्यर्थे तद्धितसंज्ञकः अण्प्रत्ययः परो भवति नक्षत्रयुक्तकालार्थे गम्यमाने इति सूत्रार्थः सिध्यति।

**उदाहरणम्** – पुष्येण युक्तम् अहः, पौषम् अहः। पुष्येण युक्तः कालः इत्यर्थे पुष्य टा इति तृतीयान्तनक्षत्रवाचिसुबन्तात् प्रकृतसूत्रेण अणि प्रातिपदिकसंज्ञायां सुपः लुकि आदिवृद्धौ भसंज्ञायां यस्येति च इत्यनेन अकारलोपे पौष्य् अ इति जाते तिष्यपुष्ययोर्नक्षत्राणि यलोप इति वाच्यम् इत्यनेन यकारलोपे अहः इति विशेष्यानुसारं नपुंसकलिङ्गे स्वादिकार्ये पौषम् इति रूपं सिध्यति। स्त्रीलिङ्गे पौषी रात्रिः इति प्रयोगः।

## [३०.३] दृष्टं साम॥ (४.२.७)

**सूत्रार्थः** – दृष्टं साम अर्थात् ज्ञानरूपतया प्राप्तं साम इत्यर्थे तृतीयान्तात् समर्थप्रातिपदिकात् तद्धितसंज्ञकः अण्प्रत्ययो भवति।

**सूत्रव्याख्या** – विधिसूत्रम् इदम् अस्ति। अस्मिन् सूत्रे पदद्वयम् अस्ति। दृष्टं साम इत्युभयमपि प्रथमैकवचनान्तं पदम्। तेन रक्तं रागात् इत्यतः तेन इति पदमनुवर्तते। तच्च तृतीयान्तानुकरणं लुप्तपञ्चम्यन्तम्। प्राग्दीव्यतोऽण् इत्यस्मात् अण् इति अनुवर्तते। प्रत्ययः, परश्च, ङ्याप्प्रातिपदिकात्, तद्धिताः, समर्थानां प्रथमाद्वा इति एते अधिक्रियन्ते। तेन पूर्वोक्तः सूत्रार्थः सिध्यति।

उदाहरणम्– वसिष्ठेन दृष्टं साम वासिष्ठं साम। वसिष्ठेन दृष्टमिति लौकिकविग्रहे वसिष्ठ टा इति तृतीयान्तात् सुबन्तात् दृष्टं साम इति प्रकृतसूत्रेण अणि तद्धितान्तप्रयुक्तप्रातिपदिकसंज्ञायां सुब्लुकि, आदिवृद्धौ भसंज्ञक–अकारस्य लोपे वासिष्ठ इति जाते एकदेशविकृतन्यायेन प्रातिपदिकत्वात् स्वादिकार्ये वासिष्ठम् इति सिध्यति। साम इति विशेष्यानुसारं नपुंसकलिङ्गे अयं प्रयोगः। एवमेव विश्वामित्रेण दृष्टं वैश्वामित्रं साम इत्यादिरूपं सिध्यति।

## [३०.४] सास्य देवता॥ (४.२.२४)

**सूत्रार्थः** – देवताविशेषवाचिनः प्रथमान्तात् समर्थात् प्रातिपदिकात् अस्येत्यर्थे तद्धितोऽण् प्रत्ययः स्यात्।

**सूत्रव्याख्या** – विधिसूत्रम् इदम् अस्ति। अस्मिन् सूत्रे त्रीणि पदानि सन्ति। सा इति प्रथमान्तानुकरणं लुप्तपञ्चम्यन्तम्, अस्य इति षष्ठ्यैकवचनान्तम्, देवता इति प्रथमैकवचनान्तम्। प्राग्दीव्यतोऽण् इत्यस्मात् अण् इति अनुवर्तते। प्रत्ययः, परश्च, ङ्याप्प्रातिपदिकात्, तद्धिताः, समर्थानां प्रथमाद्वा इति एते अधिक्रियन्ते। यज्ञादौ यमुद्दिश्य हविः प्रदीयते सा देवता। अथवा मन्त्रादौ यस्य स्तुतिः प्रतिपादनं वा भवति सा देवता इति कथ्यते। एवञ्च सा अस्य देवता इत्यर्थे देवतावाचकात् प्रथमान्तात् समर्थप्रातिपदिकात् अण्प्रत्ययो भवति।



**उदाहरणम्**– इन्द्रो देवता अस्येति ऐन्द्रं हविः। इन्द्रो देवता अस्य इति लौकिकविग्रहे इन्द्र सु इति प्रथमान्तात् सुबन्तात् सास्य देवता इति योगेन अणि सुब्लुकि आदिवृद्धौ ऐकारादेशे भसंज्ञक–अकारस्य लोपे ऐन्द् अ इति जाते वर्णसम्मेलने ऐन्द्र इति जायते। ततः हविः इति विशेष्यस्य नपुंसकलिङ्गानुसारम् अत्रापि नपुंसकलिङ्गकत्वात् सुप्रत्यये सोरमादेशे पूर्वरूपैकादेशे ऐन्द्रमिति नपुंसकपदप्रयोगः।

एवमेव पशुपतिः देवता अस्य इत्यर्थे पाशुपतम् इत्यादिपदप्रयोगः।

## [३०.५] ग्रामजनबन्धुभ्यस्तल्॥ (४.२.४३)

**सूत्रार्थः** – षष्ठ्यन्तात् समर्थात् ग्रामप्रातिपदिकात् जनप्रातिपदिकात्, बन्धुप्रातिपदिकात् च समूहार्थे तद्धितसंज्ञकः तल्प्रत्ययो भवति।

**सूत्रव्याख्या** – विधिसूत्रम् इदम् अस्ति। अस्मिन् सूत्रे पदद्वयम् अस्ति। ग्रामजनबन्धुभ्यः इति पञ्चमीबहुवचनान्तं, तल् इति प्रथमैकवचनान्तं विधीयमानम्। ग्रामश्च जनश्च बन्धुश्च तेषामितरेतरयोगद्वन्द्वो ग्रामजनबन्धवः तेभ्यः ग्रामजनबन्धुभ्यः। प्रत्ययः, परश्च, ङ्याप्प्रातिपदिकात्, तद्धिताः, समर्थानां प्रथमाद्वा इति एते अधिक्रियन्ते। तस्य समूहः इत्यस्यानुवर्तनं भवति। एवञ्च पूर्वोक्तः सूत्रार्थः सिध्यति। तलः लकार इत्संज्ञकः अतः तमात्रं शिष्यते। लिङ्गानुशासनात् तलन्तं स्त्रियाम् इति सूत्रेण तल्प्रत्ययान्तशब्दस्य स्त्रीलिङ्गे प्रयोगः भवति। अतः तल्प्रत्ययात् परं स्त्रीबोधकः टाप्प्रत्ययो भवति इति अवधेयम्।

**उदाहरणम्** – जनानां समूहः जनता। जनानां समूहः इति लौकिकविग्रहे जन आम् इति षष्ठयन्तसुबन्तात् प्रकृतसूत्रेण तल्प्रत्यये अनुबन्धलोपे प्रातिपदिकसंज्ञायां सुब्लुकि जनत इति स्थिते तलन्तत्वात् स्त्रीलिङ्गे अजाद्यतष्टाप् इत्यनेन टापि अनुबन्धलोपे सवर्णदीर्घे जनता इति जायते। ततः सुप्रत्यये सोः हल्ङ्यादिलोपे जनता इति रूपं सिध्यति। एवमेव ग्रामाणां समूहः इति ग्रामता, बन्धूनां समूहः बन्धुता इत्यादयः सिध्यन्ति।



## पाठगतप्रश्नाः-१

१. तेन रक्तं रागात् इत्यस्य कोऽर्थः।
२. काषायी इत्यत्र कः तद्धितप्रत्ययः।
३. वासिष्ठम्शब्दस्य कोऽर्थः।
४. पौषम् इत्यत्र कः तद्धितप्रत्ययः।
५. जनता इत्यत्र कः तद्धितप्रत्ययः।
६. जनताशब्दस्य कोऽर्थः।
७. ऐन्द्रमित्यत्र अण्प्रत्ययः केन भवति।



## [३०.६] तदधीते तद्वेद॥ (४.२.५९)

**सूत्रार्थः** – तद् अधीते अथवा तद् जानाति इत्यर्थे द्वितीयान्तात् समर्थप्रातिपदिकात् अण्प्रत्ययो भवति।

**सूत्रव्याख्या** – विधिसूत्रम् इदम् अस्ति। अस्मिन् सूत्रे पदचतुष्टयम् अस्ति। तद् इति द्वितीयान्तानुकरणं लुप्तपञ्चम्यन्तम्, अधीते इति तिङन्तं क्रियापदम्। तद् इति द्वितीयान्तानुकरणं लुप्तपञ्चम्यन्तं, वेद इति तिङन्तं क्रियापदम्। प्राग्दीव्यतोऽण् इत्यस्मात् अण् इति अनुवर्तते। प्रत्ययः, परश्च, ङ्याप्प्रातिपदिकात्, तद्धिताः, समर्थानां प्रथमाद्वा इति एते अधिक्रियन्ते। प्रातिपदिकात् इति विशेष्यमस्ति अतः तेन सह अन्वयार्थं द्वितीयान्त-तद्शब्दस्य पञ्चम्यन्ततया विपरिणामः क्रियते। तद्शब्दात् समर्थविभक्तिद्वितीयाया बोधो भवति। एवञ्च पूर्वोक्तः सूत्रार्थः सिध्यति। अत्र य एव अध्येता स एव ज्ञाता अपि स्यात् इति नियमो नास्ति अन्यथा तदधीते वेद इति सूत्रस्वरूपं स्यात्। सूत्रस्याशयस्तावत्-यत् पठति अथवा यत् जानाति तादृशकर्मीभूतशब्दात् प्रत्ययो भवति। ततः पठितुः ज्ञातुः वा बोधो भवति।

**उदाहरणम्** – व्याक्रियन्ते व्युत्पाद्यन्ते अनेन शब्दा इति व्याकरणम्। व्याकरणम् अधीते वेद वा इति लौकिकविग्रहे व्याकरण अम् इति द्वितीयान्तात् सुबन्तात् प्रकृतसूत्रेण अणि प्रातिपदिकसंज्ञायां सुब्लुकि व्याकरण अ इति जायते। ततः तद्धितेष्वचामादेः इत्यनेन वृद्धौ प्राप्तायां न य्वाभ्यां पदान्ताभ्यां पूर्वौ तु ताभ्यामैच् इत्यनेन निषेधे सति यकारात् पूर्वं ऐकारागमे व् ऐ याकरण अ इति जाते भसंज्ञक-अकारस्य लोपे वर्णसम्मेलने वैयाकरण इति जायते। ततः सुप्रत्ययरुत्वविसर्गादिकार्ये सति वैयाकरणः इति रूपं सिध्यति। एवमेव छन्दोऽधीते वेद वा छान्दसः इत्यादि रूपं सिध्यति।

## [३०.७] क्रमादिभ्यो वुन्॥ (४.२.६१)

**सूत्रार्थः** – क्रमादिगणपठितेभ्यः द्वितीयान्तसमर्थप्रातिपदिकेभ्यः अधीते अथवा जानाति इत्यर्थे तद्धितसंज्ञको वुन्प्रत्ययो भवति।

**सूत्रव्याख्या** – विधिसूत्रम् इदम् अस्ति। अस्मिन् सूत्रे पदद्वयम् अस्ति। क्रमः आदिर्येषां ते क्रमादयः इति तद्गुणसंविज्ञानबहुव्रीहिसमासः, तेभ्यः क्रमादिभ्यः इति पञ्चमीबहुवचनान्तं, वुन् इति प्रथमैकवचनान्तं विधीयमानम्। प्राग्दीव्यतोऽण् इत्यस्मात् अण् इति अनुवर्तते। प्रत्ययः, परश्च, ङ्याप्प्रातिपदिकात्, तद्धिताः, समर्थानां प्रथमाद्वा इति एते अधिक्रियन्ते। तदधीते तद्वेद इति सूत्रमपि अनुवर्तते। एवञ्च उक्तार्थः सम्पद्यते। वुनः नकार इत्संज्ञकः, तेन वु इत्येव शिष्यते। नितः प्रयोजनं ञ्नित्यादिर्नित्यम् इत्यनेन आद्युदात्तविधानम्। युवोरनाकौ इत्यनेन वु इत्यस्य अक-इत्यादेशो भवति। क्रमादिगणे क्रम, पद, शिक्षा, मीमांसा इति शब्दाः पठिताः।



**उदाहरणम् –** क्रमकः। क्रमम् अधीते क्रमं वेद वा इति लौकिकविग्रहे क्रम अम् इति द्वितीयान्तात् सुबन्तात् क्रमादिभ्यो वुन् इत्यनेन वुन्प्रत्यये अनुबन्धलोपे तस्य स्थाने युवोरनाकौ इत्यनेन अकादेशे क्रम अक इति जाते भसंज्ञायां यस्येति च इत्यनेन मकारोत्तरवर्तिनः अकारलोपे वर्णसम्मेलने स्वादिकार्ये क्रमकः इति सिध्यति। एवमेव पदम् अधीते पदं वेद वा इत्यर्थे पदकः, शिक्षाम् अधीते शिक्षां वेद वा इत्यर्थे शिक्षकः, मीमांसाम् अधीते मीमांसां वेद वा इत्यर्थे मीमांसकः इति रूपं सिध्यति।

## [३०.८] तदस्मिन्नस्तीति देशे तन्नाम्नि॥ (४.२.६७)

**सूत्रार्थः –** प्रकृतिप्रत्ययाभ्यां यदि देशस्य नाम सम्पद्यते तर्हि स अस्मिन् देशे अस्ति इत्यर्थे प्रथमान्तात् समर्थप्रातिपदिकात् अण्प्रत्ययो भवति।

**सूत्रव्याख्या –** विधिसूत्रमिदमस्ति। तस्य नाम तन्नाम, तस्मिन् तन्नाम्नि इति सप्तम्येकवचनान्तम्। तद् प्रथमान्तानुकरणं लुप्तपञ्चम्यन्तम्। अस्मिन् , देशे इत्युभयमपि सप्तम्येकवचनान्तम्, अस्ति क्रियापदम्, इति अव्ययपदम् इति अनेकपदमिदं सूत्रम्। प्राग्दीव्यतोऽण् इत्यस्मात् अण् इति अनुवर्तते। प्रत्ययः, परश्च, ङ्याप्प्रातिपदिकात्, तद्धिताः, समर्थानां प्रथमाद्वा इति एते अधिक्रियन्ते। तथा च प्रागुक्तार्थः सिध्यति एव। प्रथमतत्पदं प्रथमाविभक्तेः सूचकः। द्वितीयं तत्पदं प्रत्ययान्तस्य सूचकः। इतिशब्दः विवक्षार्थकः। सूत्रस्य तात्पर्यं तावत् यस्मात् शब्दात् अण्प्रत्ययो भवति सः अण्प्रत्ययान्तशब्दः कस्यापि देशस्य संज्ञा स्यात्। एवञ्च स अस्मिन् देशे अस्ति इत्यर्थे प्रथमान्तात् समर्थप्रातिपदिकात् तद्धितसंज्ञकः अण्प्रत्ययो भवति यदि स प्रत्ययान्तशब्दः कस्यापि प्रसिद्धदेशस्य नाम भवति। सूत्रमिदं मतुप्प्रत्ययस्य अपवादभूतम्।

**उदाहरणम् –** उदुम्बराः सन्ति अस्मिन् देशे इति लौकिकविग्रहे उदुम्बर जस् इति प्रथमान्तसमर्थसुबन्तात् तदस्मिन्नस्तीति देशे तन्नाम्नि इत्यनेन अण्प्रत्यये प्रातिपदिकसंज्ञायां सुब्लुकि तद्धितेष्वचामादेः इत्यनेन आद्यचः वृद्धौ औकारादेशे भसंज्ञकाकारस्य लोपे च औदुम्बर् अ इति जाते स्वादिकार्ये वर्णसम्मेलने च औदुम्बरः इति सिध्यति। अयं शब्दः स्थानविशेषस्य संज्ञा। एवमेव पर्वताः सन्ति अस्मिन् देशे इति पार्वतः देशः इत्यादि रूपं सिध्यति।

**अत्र विशेषः –** प्रागुक्तं सूत्रं चातुरार्थिकप्रकरणस्थम्। चत्वारः अर्थाः सन्ति इति हेतोः चातुरार्थिकप्रकरणमित्युच्यते। के च ते इति चेत्–

१. सः अस्मिन् अस्ति इत्येवं देशः– अस्य विषये तु उक्तमेवास्ति।

२. तेन निर्मितमित्येवं नगरी– तेन निर्वृत्तम् (४.२.६८) इति सूत्रम्। अस्योदाहरणम्– कुशुम्बेन निर्वृत्ता कौशाम्बी।

३. तस्य वासः इत्येवं देशः– तस्य निवासः (४.२.६९) इति योगः। अस्योदाहरणम्– शिबीनां निवासो देशः शैबः।

४. यः तस्मात् दूरे नास्ति इत्येवं देशः– अदूरभवश्च (४.२.७०)इति शास्त्रम्। अस्योदाहरणम्– विदिशाया अदूरभवं नगरं वैदिशम्।



## [३०.९] लुपि युक्तवद्व्यक्तिवचने॥ (१.२.५१)

**सूत्रार्थः** – प्रत्यये लुप्ते सति शब्दस्य प्रकृतिवद् लिङ्गवचने स्याताम्।

**सूत्रव्याख्या** – सूत्रमिदमतिदेशसूत्रम्। युक्तेन तुल्यं युक्तवत्। व्यक्तिश्च वचनं च तयोरितरेतरयोगद्वन्द्वः व्यक्तिवचने। लुपि सप्तम्येकवचनान्तं, युक्तवत् इति अव्ययं, व्यक्तिवचने प्रथमान्तमिति त्रिपदमिदं सूत्रम्। सूत्रेऽस्मिन् युक्तशब्दस्य प्रकृतिरर्थः, व्यक्तिशब्दस्य लिङ्गमित्यर्थः, वचनशब्दस्य संख्यार्थः। सूत्रस्याशयस्तावत्– यस्याः प्रकृतेः प्रत्ययो विहितो भवति, तस्य प्रत्ययस्य लोपेऽपि तस्याः प्रकृतेरनुसारं लिङ्गवचने भवतः न तु तस्य विशेष्यानुसारं।

**उदाहरणम्** – पञ्चालानां निवासो जनपदः पञ्चालाः। अत्र विशेष्यमस्ति जनपदः , प्रकृतिरस्ति पञ्चालाः इति प्रथमाबहुवचनान्तः पुंल्लिङ्गकश्च। पञ्चाल आम् इत्यलौकिकविग्रहे निवासार्थे जनपदार्थे च अण्प्रत्ययस्य विधाने सति जनपदे लुप् इत्यनेन तस्य लोपे प्रातिपदिकसंज्ञायां सुब्लुकि प्रकृतसूत्रेण युक्तवद्भावः अर्थात् प्रकृतिवद्भावो भवति। तस्मात् जनपदः इति विशेष्यानुसारं न लिङ्गवचने भवतः अपि तु पञ्चाल इति प्रकृत्यनुसारम्। तस्मादेव पञ्चालाः इति रूपं सिध्यति। एवमेव कुरवः, अङ्गाः, वङ्गाः कलिङ्गाः इत्यादयः सिध्यन्ति।

## [३०.१०] राष्ट्रावारपाराद्घखौ॥ (४.२.९३)

**सूत्रार्थः** – अपत्यादिचतुरर्थ्यन्तादन्योऽर्थः शेषः, तदर्थे अर्थात् जाताद्यर्थे राष्ट्रशब्दात् अवारपारशब्दात् क्रमशः घप्रत्ययः खप्रत्ययश्च भवति।

**सूत्रव्याख्या** – विधिसूत्रम् इदम् अस्ति। अस्मिन् सूत्रे पदद्वयम् अस्ति। राष्ट्रञ्च अवारपारञ्च तयोः समाहारद्वन्द्वः राष्ट्रावारपारम्, तस्मात् राष्ट्रावारपारात् इति पञ्चम्येकवचनान्तम्। घश्च खश्च तयोरितरेतरयोगद्वन्द्वो घखौ इति प्रथमद्विवचनान्तम्। शेषे इत्यस्याधिकारः अस्ति। प्रत्ययः, परश्च, ङ्याप्प्रातिपदिकात्, तद्धिताः, समर्थानां प्रथमाद्वा इति एते अधिक्रियन्ते। यथासंख्यमनुदेशः समानाम् इति परिभाषया क्रमशः राष्टशब्दात् घप्रत्ययः, अवारपारशब्दात् च खप्रत्ययो भवति। अत्र ध्यातव्यं यत् शैषिकप्रकरणस्थसूत्रैः कुत्रचित् प्रकृतेः प्रत्ययस्य वा विधानं भवति न तु कस्यापि अर्थस्य विधानं भवति। यथा राष्ट्रावारपाराद्घखौ इत्यत्र प्रकृतिप्रत्ययौ उक्तौ, अर्थस्तु अनुक्तः। क्वचित् अर्थ एव उक्तः, न तु प्रकृतिप्रत्ययौ। यथा तत्र भवः, तत्र जातः, तत आगतः इत्यादौ अर्थ एव उक्तः न तु प्रकृतिप्रत्ययौ। अतः तत्र द्वयोः सूत्रयोः मेलनेनैव एकवाक्यता सम्पद्यते तेन प्रकृति–प्रत्यय–अर्थानां बोधो भवति एवञ्च तत्र जातः इति अर्थविधायकसूत्रेण सह राष्ट्रावारपाराद्घखौ इति प्रत्ययविधायकसूत्रस्य एकवाक्यतायां सप्तम्यन्तराष्ट्रशब्दात् सप्तम्यन्त–अवारपारशब्दात् च जातार्थे क्रमशः तद्धितसंज्ञकघप्रत्ययः तद्धितसंज्ञकखप्रत्ययश्च भवति।

**उदाहरणम्** – राष्ट्रे जातादिः इति लौकिकविग्रहे, राष्ट्र ङि इति सप्तम्यन्तप्रातिपदिकात् प्रकृतसूत्रेण घप्रत्यये प्रातिपदिकसंज्ञायां सुब्लुकि राष्ट्र घ इति जायते। ततः आयनेयीनीयियः फढखछघां



प्रत्ययादीनाम् इत्यनेन घ् इत्यस्य स्थाने इयादेशे भसंज्ञक-अकारस्य लोपे राष्ट्र् इय इति जाते वर्णसम्मेलने राष्ट्रिय इति शब्दात् स्वादिकार्ये सति राष्ट्रियः इति रूपं सिध्यति।

अवारं च पारं च अवारपारम् इति समाहारद्वन्द्वः। अवारपारे जातादिः इत्यर्थे अवारपार ङि इत्यलौकिकविग्रहे प्रकृतसूत्रेण खप्रत्यये प्रातिपदिकसंज्ञायां सुब्लुकि आयनेयादिसूत्रेण ईनादेशे णत्वे स्वादिकार्ये अवारपारीणः इति रूपं सिध्यति।



## पाठगतप्रश्नाः-२

८. राष्ट्रियः इत्यत्र कः तद्धितप्रत्ययः।

९. वैयाकरणः इति शब्दस्य कोऽर्थः।

१०.लुपि युक्तवद्व्यक्तिवचने इति सूत्रं किमतिदेशसूत्रं विधिसूत्रं वा।

११.शिक्षकशब्दस्य कोऽर्थः।

१२.मीमांसकशब्दस्य कोऽर्थः।

१३.तदस्मिन्नस्तीति देशे तन्नाम्नि इति सूत्रेण कः तद्धितप्रत्ययो विधीयते।

१४.वङ्गाः इत्यस्य कोऽर्थः।

---

## [३०.११] वृद्धाच्छः॥ (४.२.११४)

**सूत्रार्थः** – वृद्धसंज्ञकात् समर्थप्रातिपदिकात् शैषिकार्थे तद्धितः छप्रत्ययः परो भवति।

**सूत्रव्याख्या** – विधिसूत्रम् इदम् अस्ति। अस्मिन् सूत्रे पदद्वयम् अस्ति। वृद्धात् इति पञ्चम्येकवचनान्तम्, छः इति प्रथमैकवचनान्तं विधीयमानम्। कस्य वृद्धसंज्ञा भवति इति पृच्छायामुच्यते-वृद्धिर्यस्याचामादिस्तद्वृद्धम् इति सूत्रेण यस्मिन् शब्दे अचां मध्ये आद्यः अच् वृद्धिसंज्ञको (आ,ऐ,औ) भवति स शब्दः वृद्धिसंज्ञको भवति। एवञ्च अनुवृत्यादिकार्ये पूर्वोक्तः सूत्रार्थः सिध्यति।

**उदाहरणम्** – शालायां भव इति लौकिकविग्रहे शाला ङि इत्यलौकिकविग्रहे वृद्धिर्यस्याचामादिस्तद्वृद्धम् इत्यनेन शालायाः आद्याचो वृद्धिसंज्ञकत्वात् वृद्धसंज्ञा भवति। ततः तत्र भवः, तत्र जातः इत्यादिशैषिकार्थेषु शाला ङि इति सप्तम्यन्ताद् समर्थप्रातिपदिकात् वृद्धाच्छ इति योगेन छप्रत्यये आयनेयादिसूत्रेण छ् इत्यस्य स्थाने ईय्-आदेशे भसंज्ञकत्वात् आकारस्य लोपे वर्णसम्मेलने स्वादिकार्ये च शालीयः इति सिध्यति। एवमेव मालायां जातादि इत्यर्थे मालीयः इत्यादि सिध्यति।

## [३०.१२] युष्मदस्मदोरन्यतरस्यां खञ्च॥ (४.३.१)

**सूत्रार्थः** – युष्मद्-अस्मद्शब्दाभ्यां विकल्पेन खञ्प्रत्ययः छप्रत्ययः अणप्रत्ययश्च भवति।



**सूत्रव्याख्या** –विधिसूत्रम् इदम् अस्ति। अस्मिन् सूत्रे पदत्रयमस्ति। युष्मत् च अस्मत् च तयोरितरेतरयोगद्वन्द्वे युष्मदस्मदौ, तयोः युष्मदस्मदोः इति पञ्चम्यर्थे षष्ठी, अन्यतरस्यामिति सप्तम्येकवचनान्तं, खञ् प्रथमैकवचनान्तम्। चेति अव्ययपदम्। प्रत्ययः, परश्च, ङ्याप्प्रातिपदिकात्, तद्धिताः, समर्थानां प्रथमाद्वा, शेषे इति एते अधिक्रियन्ते। चकारेण गर्तोत्तरपदाच्छः इति छः प्रत्ययः समुच्चीयते। सूत्रे अन्यतरस्यांग्रहणेन प्राग्दीव्यतीयः सामान्यतया प्राप्तोऽण् संगृह्यते। अत्र अस्मद्–युष्मद् इति प्रकृतिद्वयम् अस्ति, किञ्च खञ्, छः, अण् इति प्रत्ययत्रयमस्ति। एवञ्च द्वाभ्यां प्रकृतिभ्यां प्रत्ययत्रयं विधीयते। अतः अत्र यथासंख्यमनुदेशः समानाम् इति परिभाषा न प्रवर्तते इति स्मर्तव्यम्।

**उदाहरणम्** – युवयोः युष्माकं वा अयं इति लौकिकविग्रहे युष्मद् ओस् अथवा युष्मद् आम् इति अलौकिकविग्रहे युष्मदस्मदोरन्यतरस्यां खञ् च इति योगेन छप्रत्यये ईयादेशे प्रातिपदिकसंज्ञायां सुब्लुकि स्वादिकार्ये युष्मदीयः सिध्यति।

छप्रत्ययाभावे खञ्प्रत्यये च आयनेयादिसूत्रेण ईनादेशे युष्मद् ईन इति जाते तस्मिन्नणि च युष्माकास्माकौ इत्यनेन युष्मद् इत्यस्य स्थाने युष्माक इत्यादेशे तद्धितेष्वचामादेः इत्यनेन आदिवृद्धौ यौष्माक ईन इति जायते। ततः भसंज्ञकस्य अकारस्य लोपे अट्कुप्वाङ्नुम्व्यवायेऽपि इति योगेन नकारस्य णत्वे स्वादिकार्ये यौष्माकीणः इति रूपं सिध्यति।

पुनः खञ्प्रत्ययाभावे शेषे इति योगेन अण्प्रत्यये युष्मद् अ इति जाते तस्मिन्नणि च युष्माकास्माकौ इति शास्त्रेण युष्मद् इत्यस्य स्थाने युष्माक इत्यादेशे आदिवृद्धौ भसंज्ञकस्य अकारस्य लोपे स्वादिकार्ये यौष्माकः इति रूपं सिध्यति। एवञ्च वयमत्र रूपत्रयं प्राप्नुमः–

१. युष्मदीयः।

२. यौष्माकीणः।

३. यौष्माकः।

एवमेव आवयोः अयम् अथवा अस्माकम् अयम् इत्येतदर्थे छप्रत्यये अस्मदीयः इति रूपम्, खञ्प्रत्यये च अस्मद् इत्यस्य स्थाने अस्माक इत्यादेशे आदिवृद्धौ आस्माकीनः इति रूपम्, छ–खञ्प्रत्ययातिरिक्तस्थले अणि अस्माकादेशे आस्माकः इति रूपम् इत्याहत्य रूपत्रयं सिध्यति।

सम्प्रति अणि खञि च परतः एकत्वविशिष्टयोः अस्मद्–युष्मद्–शब्दयोः स्थाने आदेशं विधातुमिदं सूत्रमारभ्यते–

## [३०.१३] तवकममकावेकवचने॥ (४.३.६२)

**सूत्रार्थः** – एकार्थवाचिनोर्युष्मदस्मदोस्तवकममकौ स्तः खञि अणि च।

**सूत्रव्याख्या** – विधिसूत्रमिदं पदद्वयात्मकस्ति। तवकममकौ एकवचने इति सूत्रगतपदच्छेदः। तवकममकौ इति प्रथमाद्विवचनान्तम्। एकवचने इति प्रथमैकवचनान्तम्। तस्मिन्नणि च युष्माकास्माकौ इत्यतः अणि , तस्मिन् इत्यनयोरनुवृत्तिर्भवति। तस्मिन् इत्यनेन युष्मदस्मदोरन्यतरस्यां खञ्च इति पूर्वसूत्रात् खञ् इत्यस्य परामर्शो भवति। युष्मदस्मदोरन्यतरस्यां खञ्च इत्यतः युष्मदस्मदोः अनुवृत्तिरपि



भवति। एकस्य वचनम् (उक्तिः) इति षष्ठीतत्पुरुषे एकवचनम्, तस्मिन् एकवचने। तवकश्च ममकश्च तवकममकौ इति इतरेतरयोद्वन्द्वः। एवञ्च तस्मिन् अर्थात् खञ्प्रत्यये परे तथा अण्प्रत्यये परे एकत्वसंख्याकथने प्रयुक्तयोः युष्मद्-अस्मद्-शब्दयोः स्थाने यथासंख्यं तवक-ममक-आदेशौ भवतः इति सूत्रार्थः।

**विशेषः** – तवक-ममकौ आदेशौ अनेकालौ स्तः। अतः अनेकाल्शित्सर्वस्य इत्यनेन तौ सर्वादेशौ भवतः।

**उदाहरणम्** – खञि **उदाहरणम्** – तव अयम् इति तावकीनः। युष्मद् ङस् इत्यलौकिकविग्रहे युष्मदस्मदोरन्यतरस्यां खञ्च इति सूत्रेण तस्येदम् इति शैषिकार्थे खञि प्रातिपदिकसंज्ञायां सुब्लुकि प्रकृतसूत्रेण युष्मद्-शब्दस्य स्थाने तवक इति सर्वादेशे तवक ख इति जायते। ततः आयनेयीनीयियः फढखछघां प्रत्ययादीनाम् इत्यनेन खस्य स्थाने ईनादेशे आदिवृद्धौ भसंज्ञकस्य अकारस्य लोपे स्वादिकार्ये च तावकीनः इति रूपं सिध्यति।

खञभावपक्षे तु शेषे इति अणि तवकममकावेकवचने इत्यनेन तवकादेशे आदिवृद्धौ भसंज्ञकाकारस्य लोपे स्वादिकार्ये च तावकः इति रूपं सिध्यति।

एवमेव मम अयम् इति विग्रहे मामकीनः, मामकः इत्यत्र प्रक्रिया ज्ञेया।

एकार्थवाचि-युष्मद्शब्दात् एकार्थवाचि-अस्मद्शब्दात् च तवकममकावेकवचने इति प्रकृतसूत्रेण पक्षे छप्रत्यये छस्य स्थाने ईयादेशे युष्मद् ईय इति जाते सूत्रमिदमारभ्यते-

## [३०.१४] प्रत्ययोत्तरपदयोश्च॥ (७.२.९८)

**सूत्रार्थः** – मपर्यन्तयोः एकार्थयोः युष्मदस्मद्शब्दयोः त्वमौ स्तः प्रत्यये उत्तरपदे च।

**सूत्रव्याख्या** – विधिसूत्रेऽस्मिन् पदद्वयं वर्तते। प्रत्ययोत्तरपदयोः च इति सूत्रगतपदच्छेदः। प्रत्ययश्च उत्तरपदं च तयोः इतरेतरयोगद्वन्द्वे प्रत्ययोत्तरपदे, तयोः प्रत्ययोत्तरपदयोः इति सप्तमीद्विवचनान्तम्। चेति अव्ययम्। सूत्रेऽस्मिन् त्वमावेकवचने इत्यतः त्वमौ एकवचने इत्यनयोः, युष्मदस्मदोरनादेशे इत्यतः युष्मदस्मदोः इत्यस्य च अनुवृत्तिर्भवति। मपर्यन्तस्य इत्यधिक्रियते। समासस्य चरम् अर्थात् अन्तिमं पदम् उत्तरपदम् इत्युच्यते। एवञ्च सूत्रार्थस्तावत्- एकवचनविषयकयोः युष्मदस्मद्शब्दयोः मपर्यन्तस्य स्थाने त्वमौ आदेशौ भवतः प्रत्यये उत्तरपदे वा परतः। यथासंख्यमनुदेशः समानाम् इति परिभाषायोगेन युष्मद्शब्दस्य मपर्यन्तस्य स्थाने अर्थात् युष्म् इति स्थाने त्व इत्यादेशो भवति, अस्मद्शब्दस्य मपर्यन्तस्य स्थाने अर्थात् अस्म इति स्थाने म इत्यादेशो भवति इति सूत्रस्य तात्पर्यम्।

**उदाहरणम्** – त्वदीयः, युष्मदीयः। उत्तरपदे तु त्वत्पुत्रः, मत्पुत्रः।

**सूत्रार्थसमन्वयः** – तव अयम् इति लौकिकविग्रहे युष्मद् ङस् इत्यलौकिकविग्रहे च युष्मदस्मदोरन्यतरस्यां खञ्च इत्यनेन पाक्षिक-छप्रत्यये छस्य स्थाने ईयादेशः। ततः प्रत्ययः परः अस्ति इति हेतोः प्रत्ययोत्तरपदयोश्च इत्यनेन युष्मद्शब्दस्य मपर्यन्तस्य स्थाने अर्थात् युष्म् इत्यत्र त्वादेशे त्व



अद् ईय इति जायते। ततः अतो गुणे इति पररूपैकादेशे वर्णसम्मेलने स्वादिकार्ये च त्वदीयः इति रूपं सिध्यति। एवमेव मम अयम् इति विग्रहे मदीयः इति रूपं सिध्यति। एवञ्च तव अयम् इति विग्रहे युष्मदीयः, यौष्माकीणः, यौष्माकः, तावकीनः, तावकः, त्वदीयः इति षट् रूपाणि भवन्ति। मम अयम् इति विग्रहेऽपि षट् रूपाणि भवन्ति। तानि च अस्मदीयः, आस्माकीनः, आस्माकः, मामकीनः, मामकः, मदीयः इति।

एतद्विषये तालिकां पश्यत–

| खञ्प्रत्यये | अणप्रत्यये | छप्रत्यये |
|---|---|---|
| **एकवचने-**<br>तवायं तावकीनः।<br>ममायं मामकीनः। | **एकवचने-**<br>तवायं तावकः।<br>ममायं मामकः। | **एकवचने-**<br>तवायं त्वदीयः।<br>ममायं मदीयः। |
| **द्विवचने-**<br>युवयोरयम् यौष्माकीणः।<br>आवयोरयम् आस्माकीनः। | **द्विवचने-**<br>युवयोरयम् यौष्माकः।<br>आवयोरयम् आस्माकः। | **द्विवचने-**<br>युवयोरयम् युष्मदीयः।<br>आवयोरयम् अस्मदीयः। |
| **बहुवचने-**<br>युष्माकमयं यौष्माकीणः।<br>अस्माकमयम् आस्माकीनः। | **बहुवचने-**<br>युष्माकमयं यौष्माकः।<br>अस्माकमयम् आस्माकः। | **बहुवचने-**<br>युष्माकमयं युष्मदीयः।<br>अस्माकमयम् अस्मदीयः। |

तव पुत्रः इत्यर्थे युष्मद् ङस् पुत्र सु इत्यलौकिकविग्रहे षष्ठी इत्येनन तत्पुरुषसमासे कृत्तद्धितसमासाश्च इत्यनेन समासप्रयुक्तप्रातिपदिकसंज्ञायां सुब्लुकि युष्मद् पुत्र इति जायते। ततः पुत्रशब्दः उत्तरपदम् अस्ति इति हेतोः प्रत्ययोत्तरपदयोश्च इति प्रकृतसूत्रेण युष्म् इत्यस्य स्थाने त्वादेशे त्व अद् इति जाते अतो गुणे इति पररूपैकादेशे दकारस्य खरि च इत्येनन चर्त्वे स्वादिकार्ये त्वत्पुत्रः इति रूपं सिध्यति। एवमेव मम पुत्रः इत्यर्थे मत्पुत्रः इति रूपं जायते।

## [३०.१५] ग्रामाद्यखञौ॥ (४.२.९४)

**सूत्रार्थः –** ग्रामशब्दात् शेषार्थे तद्धितौ यखञौ प्रत्ययौ परौ स्तः।

**सूत्रव्याख्या –** ग्रामात् (५/१), घखौ (१/२) इति सूत्रगतपदच्छेदः। प्रत्ययः, परश्च, ङ्याप्प्रातिपदिकात्, तद्धिताः, समर्थानां प्रथमाद्वा इति एते अधिक्रियन्ते। एवञ्च समर्थग्रामप्रातिपदिकात् शैषिकार्थे तद्धितसंज्ञकौ यखञौ प्रत्ययौ परौ भवतः इति सूत्रार्थः। खञः ञकार इत्संज्ञकः। तेन खमात्रं शिष्यते।

**उदाहरणम् –** ग्राम्यः, ग्रामीणः।



**सूत्रार्थसमन्वयः** – ग्रामे जातो भवो वा इति लौकिकविग्रहे ग्राम ङि इत्यलौकिकविग्रहे प्रकृतसूत्रेण यप्रत्यये प्रातिपदिकसंज्ञायां सुब्लुकि ग्राम य इति जायते। ततः भसंज्ञायाम् अकारलोपे स्वादिकार्ये च ग्राम्यम् इति रूपं भवति।

खञ्प्रत्यये तु अनुबन्धलोपे प्रातिपदिकसंज्ञायां सुब्लुकि ग्राम ख इति जायते आयनेयादिसूत्रेण खकारस्य स्थाने ईनादेशे भसंज्ञादिकार्ये ग्रामीणः इति रूपमपि भवति इति रूपद्वयं सिध्यति।

## [३०.१६] आत्मन्विश्वजन भोगोत्तरपदात्खः॥ (५.१.९)

**सूत्रार्थः** – आत्मन्शब्दात् विश्वजनशब्दात् भोगोत्तरपदशब्दात् च हितार्थे खप्रत्ययो भवति।

**सूत्रव्याख्या** – विधिसूत्रेऽस्मिन् पदद्वयमस्ति। आत्मन्विश्वजन भोगोत्तरपदात् खः इति सूत्रगतपदच्छेदः। विश्वे जनाः विश्वजनाः (कर्मधारयः), भोगः उत्तरपदं यस्य स भोगोत्तरपदः। आत्मा च विश्वजनाश्च भोगोत्तरपदञ्च तेषां समाहारद्वन्द्वः– आत्मन्विश्वजनभोगोत्तरपदम्, तस्मात्। आत्मन्विश्वजनभोगोत्तरपदात् इति पञ्चम्येकवचनान्तम्। खः इति प्रथमैकवचनान्तम्। तस्मै हितम् इत्यस्यानुवृत्तिर्भवति। प्रत्ययः, परश्च, ङ्याप्प्रातिपदिकात्, तद्धिताः, समर्थानां प्रथमाद्वा, इति एते अधिक्रियन्ते। एवञ्च तस्मै=चतुर्थ्यन्तात् आत्मन्–विश्वजन–भोगोत्तरपदप्रातिपदिकात् हितम् इत्यर्थे तद्धितसंज्ञकः खप्रत्ययो भवति इति सूत्रार्थः। सूत्रमिदम् औत्सर्गिकस्य छप्रत्ययस्य अपवादभूतमस्ति।

**उदाहरणम्** – आत्मनीनम्, विश्वजनीनम्, मातृभोगीणः।

**सूत्रार्थसमन्वयः** – एवञ्च आत्मने हितम् इत्यर्थे आत्मन् ङे इति चतुर्थ्यन्तात् प्रातिपदिकात् प्रकृतसूत्रेण खप्रत्यये प्रातिपदिकंसज्ञायां सुब्लुकि आत्मन् ख इति जायते। ततः खकारस्य स्थाने ईनादेशे आत्मन् ईन् इति जाते नस्तद्धिते इत्येनन टिसंज्ञकस्य अनः लोपे प्राप्ते आत्माध्वानौ खे इति सूत्रेण प्रकृतिभावे लोपो न भवति। ततः स्वादिकार्ये आत्मनीनम् इति रूपं सिध्यति।

एवमेव विश्वजनीनम् इति रूपं सिध्यति।

मातृभोगाय हितम् इत्यत्र तु मातृशब्दात् परं भोशब्दोऽस्ति। अतः मातृभोगशब्दः भोगोत्तरशब्दः अस्ति। तस्मादेव मातृभोग ङे इत्यलौकिकविग्रहे प्रकृतसूत्रेण खप्रत्यये प्रातिपदिकसंज्ञायां सुब्लुकि खकारस्य ईनादेशे भसंज्ञकाकारस्य लोपे नकारस्य णत्वे स्वादिकार्ये च मातृभोगीणः इति रूपं सिध्यति।

## [३०.१७] सायञ्चिरम्प्राह्णेप्रगेऽव्ययेभ्यष्ट्युट्युलौ तुट् च॥ (४.३.२३)

**सूत्रार्थः** – सायमित्यादिभ्यश्चतुर्भ्योऽव्ययेभ्यश्च कालवाचिभ्यष्ट्युट्युलौ स्तस्तयोस्तुट् च।

**सूत्रव्याख्या** – विधिसूत्रेऽस्मिन् चत्वारि पदानि सन्ति। सायञ्चिरम्प्राह्णेप्रगेऽव्ययेभ्यः (५/३), ट्युट्युलौ (१/२) तुट् (१/१) च इति सूत्रगतपदच्छेदः। सायञ्च चिरञ्च प्राह्णे च प्रगे च अव्ययञ्च तेषाम् इतरेतरयोगद्वन्द्वे सायञ्चिरम्प्राह्णेप्रगेऽव्ययानि, तेभ्यः सायञ्चिरम्प्राह्णेप्रगेऽव्ययेभ्यः। ट्युश्च ट्युल् च तयोः इतरेतरयोगद्वन्द्वे ट्युट्युलौ। तुट् इति प्रथमैकवचनान्तम्। च इत्यव्ययम्। सू त्रेऽस्मिन् कालाट्ठञ् इत्यतः



वचनविपरणामेन कालेभ्यः इत्यस्यानुवृत्तिर्भवति। प्रत्ययः, परश्च, ङ्याप्प्रातिपदिकात्, तद्धिताः, समर्थानां प्रथमाद्वा, शेषे इति एते अधिक्रियन्ते। एवञ्च सूत्रार्थस्तावत् – सायम्, चिरम्, प्राह्णे, प्रगे इत्येतेभ्यः कालवाचकशब्देभ्यः, तथा कालवाचकाव्ययेभ्यश्च तद्धितसंज्ञकौ ट्यट्युलौ प्रत्ययौ भवतः, तयोः प्रत्यययोः तुडागमोऽपि भवति। अत्र सायम्, चिरम्, प्राह्णे, प्रगे इत्येते न अव्ययानि अन्यथा अव्ययत्वादेव सिद्धे पुनः पृथक् उल्लेखः व्यर्थः स्यात्। तयोः प्रत्यययोः टकारलकारौ इतौ स्तः। अतः यु इति शिष्यते इति उभयोः प्रत्यययोः समानरूपता भाति तथापि स्वरे भेदोऽस्ति इति अवधेयम्। तुडागमे च उकारटकारौ इतौ स्तः, त्–इत्येव शिष्यते। यु इत्यस्य स्थाने युवोरनाकौ इत्यनेन अन–इत्यादेशो भवति। टित्करणस्य प्रयोजनम्–स्त्रीत्वविवक्षायां टिड्ढाणञित्यादिसूत्रेण ङीप्प्रसक्तिः। तेन सायन्तनं कृत्यम्, सायन्तनी वेला। अत्र अवधेयम्– प्रकृतसूत्रेण साय–चिरशब्दयोः मान्तत्वं किञ्च प्राह्ण–प्रगशब्दयोः एदन्तत्वम् निपात्यते।

**उदाहरणम्**– सायन्तम्। चिरन्तनम्। प्राह्णेतनम्। प्रगेतनम्।

**सूत्रार्थसमन्वयः** – साये भवः इत्यर्थे सप्तम्यन्ताद् घञन्तात् सायशब्दात् तत्र भवः इति शैषिकार्थे प्रकृतसूत्रेण ट्युप्रत्यये ट्युल्प्रत्यये वा प्रातिपदिकसंज्ञायां सुब्लुकि यु इत्यस्य स्थाने अनादेशे तुडागमे सायशब्दस्य मान्तत्वनिपातने स्वादिष्वसर्वनामस्थाने इति सूत्रेण पदसंज्ञायां मकारस्य अनुस्वारे अनुस्वारस्य वैकल्पिकपरसवर्णे स्वादिकार्ये च सायन्तनः, सायंतनः इति रूपद्वयं सिध्यति।

चिरे भवः इत्यर्थे चिरन्तनम्। अस्मिन्नेवार्थे तु चिरपरुत्परारिभ्यस्त्नो वक्तव्यः इति वार्तिकेन त्न–प्रत्यये स्वादिकार्ये च चिरत्नम् इति रूपं भवति।

प्राह्णे भवो जातो वा इत्यर्थे प्राह्णेतनम् इति रूपं भवति।

प्रगे भवो जातो वा इत्यर्थे प्रगेतनः इति रूपम्। प्रगेतनो विहारः (Morning walk) इति प्रयोगः।

कालवाचकस्य उदाहरणम्–

दोषा भवं दोषातनम्। अत्र रात्रिवाचकदोषाशब्दात् तत्र भवः इति शैषिकार्थे प्रकृतसूत्रेण ट्युप्रत्यये ट्युल्प्रत्यये वा दोषातनम् इति रूपं सिध्यति।

एवमेव–

१. दिवा भवं दिवातनम् (दिन में होने वाला)।
२. श्वो भवं श्वस्तनम् (आगामी कल में होने वाला)।
३. ह्यो भवं ह्यस्तनम् (गतकल में होने वाला)।
४. अद्यो भवम् अद्यतनम् (आज होने वाला)।
५. पुरा भवं पुरातनम् (पूर्वकाल में होने वाला)।
६. सदा भवः सदातनः (हमेशा होने वाला)।
७. सना भवः सनातनः (सदा होने वाला)।



८. अधुना भवः अधुनातनः (अब होने वाला)।

९. इदानीं भवः इदानीन्तनः (अब होने वाला)।

१०.प्राग्भवः प्राक्तनः (पहले होने वाला)।

११.प्रातर्भवः प्रातस्तनः (प्रातः होने वाला)।

१२.ऐषमो भवम् ऐषमस्तनम् (इस वर्ष होने वाला)।

## [३०.१८] जिह्वामूलाङ्गुलेश्छः॥ (४.३.६२)

**सूत्रार्थः** – जिह्वामूलशब्दात् अङ्गुलशब्दात् च तत्र भवः इत्यर्थे छप्रत्ययो भवति।

**सूत्रव्याख्या** – विधिसूत्रम् इदम् अस्ति। अस्मिन् सूत्रे पदद्वयम् अस्ति। जिह्वाया मूलं जिह्वामूलम्, जिह्वामूलञ्च अङ्गुलिश्च तयोः समाहारद्वन्द्वो जिह्वामूलाङ्गुलिः, सौत्रं पुंस्त्वं तस्माद् जिह्वामूलाङ्गुलेः इति पञ्चम्येकवचनान्तम्। छः इति प्रथमैकवचनान्तं विधीयमानम्। प्रत्ययः, परश्च, ङ्याप्प्रातिपदिकात्, तद्धिताः, समर्थानां प्रथमाद्वा, शेषे इति एते अधिक्रियन्ते। ततः पूर्वोक्तार्थः सिध्यति। जिह्वामूलम् अङ्गुलिः चेति उभौ शब्दौ अवयववाचकौ इति हेतोः शरीरावयवाच्च इत्यनेन यत्प्रत्यये प्राप्ते तं बाधित्वा छप्रत्ययो भवति।

**उदाहरणम्** – जिह्वामूले भवम् इति लौकिकविग्रहे जिह्वामूल ङि इत्यलौकिकविग्रहे प्रकृतसूत्रेण छप्रत्यये आयनेयादिसूत्रेण ईयादेशे प्रातिपदिकसंज्ञायां सुब्लुकि भसंज्ञायाम् अकारलोपे स्वादिकार्ये जिह्वामूलीयम् इति रूपं सिध्यति। एवमेव पूर्वप्रक्रियानुसारम् अङ्गुलीयम् इति रूपं सिध्यति।

## [३०.१९] गोश्च पुरीषे॥ (४.३.१४५)

**सूत्रार्थः** – पुरीषार्थे अर्थात् मलार्थे गोप्रातिपदिकात् मयट्प्रत्ययो भवति।

**सूत्रव्याख्या** – विधिसूत्रम् इदम् अस्ति। त्रिपदं सूत्रमस्ति। गोः पञ्चम्येकवचनान्तं चेत्यव्ययपदं पुरीषे इति सप्तम्येकवचनान्तम। प्रत्ययः, परश्च, ङ्याप्प्रातिपदिकात्, तद्धिताः, समर्थानां प्रथमाद्वा, शेषे इति एते अधिक्रियन्ते। तस्य विकार इति सम्पूर्णं सूत्रमनुवर्तते। मयड् वैतयोर्भाषायामभक्ष्याच्छादनयोः इत्यतः मयट् अनुवर्तते। एवञ्च उक्तसूत्रार्थः सिध्यति। सूत्रमिदं गोपयसोर्यत् इति सूत्रस्य बाधकमस्ति। यद्यपि गोमलं न गोः अवयवो न वा तस्य विकारः तथापि सम्बन्धसामान्यमादाय तथोक्तम्।

**उदाहरणम्** – गोः पुरीषं गोमयम्। गोः विकारः इति लौकिकविग्रहे गो ङस् इत्यलौकिकविग्रहे प्रकृतसूत्रेण मयट्प्रत्यये अनुबन्धलोपे गो मय इति स्थिते प्रातिपदिकसंज्ञादिकार्ये गोमयम् इति रूपं सिध्यति।

## [३०.२०] रक्षति (४.४.३३)॥

**सूत्रार्थः** – रक्षति इत्यर्थे द्वितीयान्तात् समर्थप्रातिपदिकात् तद्धितः औत्सर्गिकठक्प्रत्ययो भवति।



**सूत्रव्याख्या** – विधिसूत्रम् इदम् अस्ति। एकपदं सूत्रमस्ति। रक्षति इति अर्थबोधकं क्रियापदम्। तत् प्रत्यनुपूर्वमीपलोमकूलम् इत्यतः तत् इति द्वितीयान्तपदस्यानुवृत्तिर्भवति। प्राग्वहतेष्ठक् इत्यतः ठक्प्रत्ययः अनुवर्तते। प्रत्ययः परश्च, ङ्याप्प्रातिपदिकात्, तद्धिताः, समर्थानां प्रथमाद्वा, इति एते अधिक्रियन्ते। तेन पूर्वोक्तः सूत्रार्थः सिध्यति।

**उदाहरणम्** – समाजं रक्षति इति सामाजिकः। समाजं रक्षति इति लौकिकविग्रहे समाज अम् इत्यलौकिकविग्रहे रक्षति इति सूत्रेण ठक्प्रत्यये अनुबन्धलोपे ठस्येकः इत्यनेन ठ इत्यस्य स्थाने इक इत्यादेशे समाज इक इति जाते ठकः कित्त्वात् किति च इत्यनेन आदिवृद्धौ भसंज्ञकाकारस्य लोपे स्वादिकार्ये सामाजिकः इति रूपं सिध्यति।

## [३०.२१] नौवयोधर्मविषमूलमूलसीतातुलाभ्यस्तार्यतुल्यप्राप्यवध्या नाम्यसमसमितसम्मितेषु॥ (४.४.९१)

**सूत्रार्थः** – नौ, वयस्, धर्म, विष, मूल, मूल, सीता, तुला इत्येतेभ्यः शब्देभ्यः परं क्रमशः योग्य–तुल्य–प्राप्य–वध्य–प्राप्यलाभ–सम–एकीकरण–तोलनार्थेषु यत्प्रत्ययो भवति।

**सूत्रव्याख्या** – विधिसूत्रम् इदम् अस्ति। द्विपदं सूत्रमस्ति। नौश्च वयश्च धर्मश्च विषञ्च मूलञ्च मूलञ्च सीता च तुला च तेषामितरेतरयोगद्वन्द्वो नौवयोधर्मविषमूलमूलसीतातुलास्ताभ्यः नौवयोधर्मविषमूलमूलसीतातुलाभ्यः इति पञ्चमीबहुवचनान्तम्। तार्यञ्च तुल्यञ्च प्राप्यञ्च वध्यञ्च आनाम्यञ्च समश्च समितञ्च सम्मितञ्च तेषामितरेतरयोगद्वन्द्वः तार्यतुल्यप्राप्यवध्यानाम्यसमसमितसम्मितानि तेषु तार्यतुल्यप्राप्यवध्यानाम्यसमसमितसम्मितेषु सप्तमीबहुवचनान्तम्। प्राग्घिताद्यत् इत्यतः यत् अनुवर्तते। प्रत्ययः, परश्च, ङ्याप्प्रातिपदिकात्, तद्धिताः, समर्थानां प्रथमाद्वा इति एते अधिक्रियन्ते। एवञ्च पूर्वोक्तः सूत्रार्थः सिध्यति।

**उदाहरणम्** – सम्प्रति क्रमश उदाहरणानि आलोच्यन्ते–

१. नाव्यम्– नावा तार्यम् इति लौकिकविग्रहे नौ टा इत्यलौकिकविग्रहे च प्रकृतसूत्रेण तार्यार्थे यत्प्रत्यये अनुबन्धलोपे प्रातिपदिकसंज्ञायां सुब्लुकि नौ य इति जाते वान्तो यि प्रत्यये आव्–आदेशे विभक्त्यादिकार्ये नाव्यम् इति रूपं सिध्यति।

२. वयस्यः– वयसा तुल्यम् इत्यर्थे वयस् टा इत्यलौकिकविग्रहे प्रकृतसूत्रेण यत्प्रत्यये प्रातिपदिकसंज्ञादिकार्ये वयस्यः इति रूपं सिध्यति।

३. धर्म्यम्– धर्मेण प्राप्यम् धर्म्यम्।

४. विष्यः– विषेण वध्यः।

५. मूल्यम्–मूलेन (पूँजी) आनाम्यम्।

६. मूल्यः–मूलेन समः मूल्यः।

७. सीत्यम्–सीतया समितं सीत्यम्।

८. तुल्यम्–तुलया सम्मितं तुल्यम्

इत्येवं सूत्रस्यास्य अष्टौ उदाहरणानि प्रदर्शितानि।



## पाठगतप्रश्नाः-३

१५. नौवयोधर्मादिसूत्रं पूरयत।

१६. सामाजिकशब्दस्य कोऽर्थः।

१७. गोः पुरीषमित्यर्थे किं रूपं भवति।

१८. जिह्वामूलीयम् इत्यत्र कः प्रत्ययः केन च।

१९. युवयोः युष्माकं वा अयम् इत्यर्थे कति रूपाणि भवन्ति तानि च कानि।

२०. वृद्धसंज्ञा केन भवति।

२१. वृद्धसंज्ञाया एकं फलं लिखत।

२२. शालीयः इत्यत्र कः तद्धितप्रत्ययः।



## पाठसारः

तद्धितप्रकरणस्य अस्मिन् तृतीयपाठे अण्–तल्–वुन्–घः–खः–छः–खञ्–मयट्–यत् इत्यादितद्धितप्रत्यया आलोचिताः सन्ति। एतेषु कदाचित् एक एव प्रत्ययः भिन्नार्थेषु स्यात् यथा अण्प्रत्ययः कदाचित् तेन युक्तमित्यर्थे, कदाचित् च तेन दृष्टमित्यर्थे कदाचित् वा प्रकृतिप्रत्ययाभ्यां देशस्य नाम्नि गम्यमाने भवति। किञ्च क्वचित् तद्धितपदस्य लुप्तस्थले प्रकृतिवद् वचनं क्रियते , यथा लुपि युक्तवद्व्यक्तिवचने इत्यतिदेशसूत्रमपि आलोचितमस्ति। सर्वोपरि लोकव्यवहारोपयोगिनः शब्दाः आलोचिताः सन्ति यथा भवन्तः तान् व्यवहर्तुं शक्नुयुः।



## पाठान्तप्रश्नाः

१. नौवयोधर्मादिसूत्रं प्रपूर्य व्याख्यात।

२. जिह्वामूलाङ्गुलेश्छः इति सूत्रं सोदाहरणं व्याख्यात।

३. युष्मदस्मदोरन्यतरस्यां खञ्च इति सूत्रं सोदाहरणं व्याख्यात।

४. युवयोः युष्माकं वा अयम् इत्यर्थे तद्धितप्रत्ययप्रयोगे कति रूपाणि भवन्ति तानि च प्रक्रियासहयोगेन निरूप्यन्ताम्।



५. लुपि युक्तवद्व्यक्तिवचने इत्यतिदेशसूत्रं सोदाहरणं व्याख्यात।

६. तदस्मिन्नस्तीति देशे तन्नाम्नि सूत्रं सोदाहरणं व्याख्यात।

७. क्रमादिभ्यो वुन् सूत्रं सोदाहरणं व्याख्यात।

८. तदधीते तद्वेद सूत्रं सोदाहरणं व्याख्यात।

९. ग्रामजनबन्धुभ्यस्तल् सूत्रं सोदाहरणं व्याख्यात।



## पाठगतप्रश्नोत्तराणि

### उत्तराणि–१

१. रज्यते अनेन इत्यर्थे तृतीयान्तात् रङ्गवाचकात् समर्थप्रातिपदिकात् अण्प्रत्ययो भवति।

२. अण्।

३. वसिष्ठेन दृष्टम्।

४. अण्।

५. तल्।

६. जनानां समूहः।

७. सास्य देवता।

### उत्तराणि-२

८. घप्रत्ययः।

९. व्याकरणम् अधीते वेद वा।

१०. अतिदेशसूत्रम्।

११. शिक्षाम् अधीते शिक्षां वेद वा।

१२. मीमांसाम् अधीते मीमांसां वेद वा।

१३. अण्।

१४. वङ्गानां निवासो जनपदः वङ्गाः।

### उत्तराणि-३

१५. नौवयोधर्मविषमूलमूलसीतातुलाभ्यस्तार्यतुल्यप्राप्यवध्यानाम्यसमसमितसम्मितेषु।

१६. रूपत्रयम्। युष्मदीयः, यौष्माकीनः, यौष्माकः।

१७. वृद्धिर्यस्याचामादिस्तद्वृद्धम् इत्यनेन।

१८. समाजं रक्षति।

१९. गोमयम्।

२०. छप्रत्ययः, जिह्वामूलाङ्गुलेश्छः इति योगेन।



२१. वृद्धाच्छः इत्यनेन छप्रत्ययविधानम्।

२२. छप्रत्ययो विधीयते।

॥इति त्रिंशः पाठः ॥



३१

# अथ ठञधिकारादिप्रकरणम्

## प्रस्तावना

समग्रतद्धितप्रकरणमादाय ये तावत् चत्वारः पाठाः कल्पिताः सन्ति। सम्प्रति तेषु अन्तिमपाठः अत्र प्रस्तूयते। अस्मिन् चतुर्थे पाठे ठञधिकारप्रकरणतः स्वार्थिकप्रकरणं यावद् आलोच्यते। अस्मिन् तुर्ये पाठे ये तावत् अस्मद्व्यवहृताः शब्दा वर्तन्ते ते एव मुख्यतया आलोच्यन्ते यथा संस्कृतभाषया अस्माकं लोकव्यवहारः सुष्ठु स्यात्। तत्र तत्र प्रसिद्धानि तद्धितान्तरूपाणि प्रदर्शितानि सन्ति। यथा - च्विप्रत्ययान्तरूपं, तयप्प्रत्ययान्तरूपं, वतुप्प्रत्ययान्तरूपं, तरप्प्रत्ययान्तरूपं, तमप्प्रत्ययान्तरूपमित्येवं विविधानि रूपाणि। एवञ्च अणञौ, त्वतलौ, इमनिच्, ष्यञ्, वतुप्, तयप्, तमप्, तरप्, च्वि इत्यादयः प्रत्यया मुख्यतया अत्र आलोच्यन्ते। अग्रे एतेषां स्पष्टम् आलोचनं भविष्यति। तद्धितप्रत्ययः प्रातिपदिकात् भवति इति भवन्तः पूर्वं ज्ञातवन्तः। किन्तु कदाचित् तिङन्तादपि भवति यथा पचतितमाम्। तद्धितप्रत्ययविधायकसूत्रेषु प्रत्ययः, परश्च, ङ्याप्प्रातिपदिकात्, तद्धिताः, समर्थानां प्रथमाद्वा इत्येते अधिक्रियन्ते इति स्मर्तव्यम्।



## उद्देश्यानि

अमुं पाठं पठित्वा भवताम्/भवतीनाम्

- सरलतया ठञादिप्रत्ययानां प्रयोगज्ञानं भविष्यति।
- ठञधिकारप्रकरणादीनां सूत्राणाम् अर्थज्ञानं भविष्यति।
- लौकिकालौकिकविग्रहाणां परिचयो भविष्यति।
- ठञधिकारप्रकरणादीनां सूत्राणाम् उदाहरणानां ज्ञानं भविष्यति।
- तद्धितप्रत्ययस्य प्रयोगविषये सहजतया ज्ञानं भविष्यति।
- सर्वोपरि तद्धितान्तपदस्य प्रयोगः क्व कथञ्च कर्तव्य इति विवेको भविष्यति।

## [३१.१] तस्येश्वरः॥ (५.१.४२)

सूत्रार्थः - सर्वभूमिपृथिवीभ्याम् अणञौ स्तः।

**सूत्रव्याख्या** - विधिसूत्रेऽस्मिन् पदद्वयमस्ति। तस्य (५/२), ईश्वरः (१/१) इति सूत्रगतपदच्छेदः। सूत्रे तस्य इति षष्ठ्यन्तानुकरणं लुप्तपञ्चमीकम्। सर्वभूमिपृथिवीभ्यामणञौ इति सूत्रमनुवर्तते। प्रत्ययः, परश्च, ङ्याप्प्रातिपदिकात्, तद्धिताः, समर्थानां प्रथमाद्वा इत्येते अधिक्रियन्ते। सर्वा भूमिः सर्वभूमिः, कर्मधारये पूर्वपदस्य पुंवद्भावः, सर्वभूमिश्च पृथिवी च सर्वभूमिपृथिव्यौ, ताभ्यां



सर्वभूमिपृथिवीभ्याम्, इतरेतरयोगद्वन्द्वः। यथासंख्यमनुदेशः समानाम् इति परिभाषा प्रवर्तते। एवञ्च तस्य=षष्ठ्यन्ताभ्यां सर्वभूमिपृथिवीभ्यां प्रातिपदिकाभ्याम् ईश्वरार्थे (स्वाम्यर्थे) यथासंख्यं तद्धितसंज्ञकौ अणञौ प्रत्ययौ परौ स्तः इति सूत्रार्थः सिध्यति। एवञ्च सर्वभूमिशब्दात् अण्, पृथिवीशब्दात् च अञ् भवति इति विज्ञेयम्। अणः णकारः, अञः ञकारश्च इत् भवति। तेन उभयत्रापि अकार एव शिष्यते। तयोस्तु स्वरे भेदः। यथा णितः फलम् अन्तोदात्तस्वरविधानम्। ञितः फलं तु उदात्तादिस्वरविधानम्।

**उदाहरणम्** - सार्वभौमः। सर्वभूमेः ईश्वरः इति लौकिकविग्रहे सर्वभूमि ङस् इति षष्ठ्यन्तात् प्रातिपदिकात् तस्येश्वर इति योगेन अणि तद्धितान्तत्वात् कृत्तद्धितसमासाश्च इत्यनेन प्रातिपदिकसंज्ञायां सुपो धातुप्रातिपदिकयोः इति योगेन सुब्लुकि तद्धितेष्वचामादेः इत्यनेन इत्यनेन आदिवृद्धौ प्राप्तायाम् अनुशतिकादिषु सर्वभूमिशब्दस्य पाठात् तां वृद्धिं बाधित्वा अनुशतिकादीनाञ्च इति सूत्रेण उभयपदवृद्धौ सार्वभौम अ इति जाते यचि भम् इत्यनेन मकारोत्तरवर्तिनः अकारस्य भसंज्ञायां यस्येति च इत्यनेन तस्य अकारस्य लोपे सार्वभौम् अ इति जाते एकदेशविकृतन्यायेन प्रातिपदिकत्वात् स्वादिकार्ये सार्वभौमः इति रूपं सिध्यति।

एवमेव पृथिव्याः ईश्वरः इत्यर्थे प्रकृतसूत्रेण अञि तद्धितेष्वचामादेः इत्यनेन आदिवृद्धौ स्वादिकार्ये पार्थिवः इति रूपं सिध्यति।

किञ्च तत्र विदित इति च इति योगेन तत्र विदित इत्यर्थे सर्वभूमिपृथिवीशब्दाभ्याम् अणञौ भवत इत्युच्यते तेन सर्वभूमौ विदित इत्यर्थे तेन सूत्रेण अणि सार्वभौमः इति रूपं सिध्यति। पृथिव्यां विदित इत्यर्थे अञि पार्थिवः इति रूपं सिध्यति।

## [३१.२] तस्य भावस्त्वतलौ॥ (४.१.११९)

**सूत्रार्थः** - षष्ठ्यन्तसमर्थप्रातिपदिकात् भावार्थे त्वतलौ तद्धितसंज्ञकौ प्रत्ययौ परौ स्याताम्।

**सूत्रव्याख्या** - विधिसूत्रेऽस्मिन् पदत्रयमस्ति। अस्मिन् सूत्रे तस्य (५/१), भावः (१/१), त्वतलौ (१/२) इति सूत्रगतपदच्छेदः। **सूत्रे तस्य इति षष्ठ्यन्तानुकरणं लुप्तपञ्चमीकम्।** त्वश्च तल् च तयोरितरेतरयोगद्वन्द्वस्त्वतलौ। भावः प्रथमैकवचनान्तम्। प्रत्ययः, परश्च, ङ्याप्प्रातिपदिकात्, तद्धिताः, समर्थानां प्रथमाद्वा इति एते अधिक्रियन्ते। प्रकृतिजन्यबोधे प्रकारः भाव इत्युच्यते। अर्थात् प्रकृतौ यद्विशेषणतया भासते तदेव भाव इति शब्देनोच्यते। यथा गोरूपप्रकृतौ गोत्वरूपविशेषणं भासते, स एव भाव इत्युच्यते। एवञ्च सामान्यतया वयं वक्तुं शक्नुमो यत् कस्यापि शब्दस्य प्रवृत्तिनिमित्तमेव भाव इत्युच्यते। यथा घटे घटत्वम्, पुस्तके पुस्तकत्वम्। भावविषये अधिकं ज्ञातुं लघुसिद्धान्तकौमुदीस्थम् इदं सूत्रं पश्यतु।

**उदाहरणम्** - गोर्भावः इति लौकिकविग्रहे गो ङस् इति षष्ठ्यन्तात् प्रातिपदिकात् तस्य भावस्त्वतलौ इति शास्त्रेण त्वप्रत्यये प्रातिपदिकसंज्ञायां सुब्लुकि गोत्व इति जाते सुविभक्तौ त्वान्तं नपुंसकम् इति योगेन त्वप्रत्ययान्तस्य नपुंसकत्वमस्तीति हेतोः सोरमादेशे पूर्वरूपैकादेशे गोत्वम् इति रूपं सिध्यति। यदा तु तल् प्रत्ययो विधीयते तदा तु लकारस्य इत्संज्ञात्वात् तलन्तं स्त्रियाम् इति योगेन तलन्तस्य स्त्रीलिङ्गकत्वात् अजाद्यतष्टाप् इत्यनेन टापि अनुबन्धलोपे अकः सवर्णे दीर्घः इति सवर्णदीर्घे



सोः हल्ङ्यादिलोपे च गोता इति रमावद् रूपं सिध्यति तेन गोता इति रूपं सिध्यति। एवं गोत्वं गोता इति रूपद्वयं भवति।

## [३१.३] पृथ्वादिभ्य इमनिज्वा॥ (५.१.१२२)

**सूत्रार्थः** - पृथ्वादिगणपठितेभ्यः षष्ठ्यन्तसमर्थप्रातिपदिकेभ्यः भावार्थे तद्धितसंज्ञकः इमनिच्प्रत्ययो परो विकल्पेन भवति।

**सूत्रव्याख्या** - विधिसूत्रेऽस्मिन् पदत्रयमस्ति। पृथ्वादिभ्यः (५/३), इमनिच् (१/१) वा (अव्ययम्) इति सूत्रगतपदच्छेदः। पृथुः आदिर्येषां ते पृथ्वादयः तेभ्यः पृथ्वादिभ्यः इति तद्गुणसंविज्ञानबहुव्रीहिः। पृथ्वादिः एको गणः। स च गणपाठस्थः। तस्य भावस्त्वतलौ इत्यतः तस्य (५/३), भावः इत्यनयोरनुवृत्तिर्भवति। प्रत्ययः, परश्च, ङ्याप्प्रातिपदिकात्, तद्धिताः, समर्थानां प्रथमाद्वा इति एते अधिक्रियन्ते। एवञ्च तस्य=षष्ठ्यन्तेभ्यः पृथ्वादिप्रातिपदिकेभ्यः भावार्थे तद्धितसंज्ञकः इमनिच् प्रत्ययो विकल्पेन भवति इति सूत्रार्थः। सूत्रे वा-वचनम् अणादिसमावेशार्थम्। इमनिचः द्वितीयः इकारः चकारश्च इतौ स्तः। अतः इमन्-मात्रं शिष्यते। चकारानुबन्धः स्वरार्थम्। इमनिच्प्रत्ययान्तशब्दः संस्कृते पुंलिङ्गको भवति।

**उदाहरणम्** - पृथोर्भावः इति लौकिकविग्रहे, पृथु ङस् इति षष्ठ्यन्तात् प्रातिपदिकात् पृथ्वादिभ्य इमनिज्वा इत्यनेन विकल्पेन इमनिच्प्रत्यये अनुबन्धलोपे प्रातिपदिकसंज्ञायां सुब्लुकि पृथु इमन् इति स्थिते र ऋतो हलादेर्लघोः इत्यनेन ऋकारस्य स्थाने र-इत्यादेशे प् र इमन् इति जाते टेः इत्यनेन टिसंज्ञकस्य उकारस्य लोपे प्रथ् इमन् इति जाते सुप्रत्यये उपधादीर्घे हल्ङ्यादिलोपे नकारस्य लोपे च प्रथिमा इति रूपं सिध्यति। एवञ्च राजन्शब्दवत् रूपाणि भवन्ति - प्रथिमानौ प्रथिमानः इति। यदा तु इमनिच् न भवति तदा इगन्ताच्च लघुपूर्वात् इत्यनेन अण्प्रत्यये पृथु अ इति जाते ओर्गुणः इत्यनेन गुणे ओकारे तत्स्थाने अवादेशे स्वादिकार्ये पार्थवम् इति रूपं सिध्यति। किञ्च आ च त्वात् इत्यतः त्वतलोरधिकृतत्वात् तौ अपि भवतः तेन पृथुत्वम्, पृथुता इति रूपद्वयं भवति। एवञ्च प्रथिमा, पार्थवं, पृथुता, पृथुत्वम् इति रूपचतुष्टयं सिध्यति।

## [३१.४] गुणवचनब्राह्मणादिभ्यः कर्मणि च॥ (५.१.१२४)

**सूत्रार्थः**- षष्ठ्यन्तसमर्थगुणवाचकप्रातिपदिकात् ब्राह्मणादिगणपठितषष्ठ्यन्त-समर्थप्रातिपदिकात् च भावार्थे कर्मार्थे च तद्धितसंज्ञकः ष्यञ्प्रत्ययः परो भवति।

**सूत्रव्याख्या** - विधिसूत्रेऽस्मिन् त्रीणि पदानि सन्ति। गुणवचनब्राह्मणादिभ्यः (५/३), कर्मणि (७/१) च इति सूत्रगतपदच्छेदः। गुणं प्रोक्तवन्तः इति गुणवचनाः। ब्राह्मणः आदिर्येषां ते ब्राह्मणादयः इति तद्गुणसंविज्ञानबहुव्रीहिसमासः। गुणवचनाश्च ब्राह्मणादयश्च तेषामितरेतरयोगद्वन्द्वो गुणवचनब्राह्मणादयः तेभ्यः गुणवचनब्राह्मणादिभ्यः। तस्य भावस्त्वतलौ इत्यतः तस्य , भावः इत्यनयोः पदयोः, किञ्च वर्णदृढादिभ्यः ष्यञ् इत्यतः ष्यञ् इति पदस्य चानुवृत्तिर्भवति। प्रत्ययः, परश्च, ङ्याप्प्रातिपदिकात्, तद्धिताः, समर्थानां प्रथमाद्वा इति एते अधिक्रियन्ते। एवञ्च तस्य=षष्ठ्यन्तेभ्यः



गुणवचनब्राह्मणादिप्रातिपदिकेभ्यः कर्मणि भावे च तद्धितसंज्ञकः ष्यञ्प्रत्ययः परो भवति इति सूत्रार्थः सिध्यति। ष्यञः षकारस्य षः प्रत्ययस्य इत्यनेन इत्संज्ञा भवति इत्यवधेयम्। चकाराद् भावेऽपि ष्यञ् भवति इति चकारपदप्रयोजनम्। ब्राह्मणादिगणः आकृतिगणः। कर्मपदेन कार्यक्रिययोर्बोधो भवति। गुणवचनशब्दः स एव भवति य आदौ गुणार्थे प्रवृत्तो भवति। ततः गुणगुणिनोः अभेदोपचारात् मतुब्लुकः वा तद्गुणयुक्तद्रव्यस्य वाचको भवति। पूर्वतनसूत्रैः भावार्थे एव प्रत्ययस्य विधानं कृतमस्ति अत्र तु कर्मार्थे अपि प्रत्ययविधानार्थं योगोऽयमारब्धः।

**उदाहरणम्-** जडस्य भावः कर्म वा इति लौकिकविग्रहे जड ङस् इति षष्ठ्यन्तात् गुणवचनप्रातिपदिकात् गुणवचनब्राह्मणादिभ्यः कर्मणि च इत्यनेन ष्यञ्प्रत्यये अनुबन्धलोपे प्रातिपदिकसंज्ञायां सुब्लुकि आदिवृद्धौ भसंज्ञकाकारलोपे स्वादिकार्ये जाड्यम् इति रूपं सिध्यति। ततः त्वतलयोः प्रत्यययोः कृतयोः जडत्वम्, जडता। किञ्च केवले भावार्थे दृढादित्वात् इमनिचि जडिमा इति रूपं सिध्यति।

एवं ब्राह्मणस्य भावः कर्म वा ब्राह्मण्यम्, ब्राह्मणत्वम्, ब्राह्मणता।

चोरस्य भावः कर्म वा चौर्यम्, चौर्यत्वम्, चौर्यता इत्यादीनि रूपाणि सिध्यन्ति।

## [३१.५] तेन वित्तश्चुञ्चुप्चणपौ॥ (५.२.२६)

**सूत्रार्थः** - तृतीयान्तसमर्थप्रातिपदिकात् वित्तार्थे चुञ्चुप्-चणपौ प्रत्ययौ परौ भवतः।

**सूत्रव्याख्या** - विधिसूत्रम् इदम् अस्ति। अस्मिन् सूत्रे पदत्रयमस्ति। तेन, वित्तः, चुञ्चुप्चणपौ इति सूत्रगतपदच्छेदः। चुञ्चुप् च चणप् च तयोरितरेतरयोगद्वन्द्वः चुञ्चुप्चणपौ इति प्रथमाद्विवचनान्तं विधीयमानम्। तेन इति तृतीयैकवचनान्तम्। वित्तः इति सप्तम्यर्थे प्रथमान्तः। प्रत्ययः, परश्च, ङ्याप्प्रातिपदिकात्, तद्धिताः, समर्थानां प्रथमाद्वा इति एते अधिक्रियन्ते। ननु तयोः चुञ्चुप्चणपोः प्रत्यययोः आद्यचकारस्य चुटू इति इत्संज्ञाप्राप्तिः इति पृच्छायामुच्यते भाष्यकारः अत्र य्चुञ्चुप्-य्चणपौ इति यकारप्रश्लेषपाठं पठति। अतः आद्यचकाराभावान्न दोषः। चुञ्चुप् -चणप् इत्युभयत्र पकारस्य इत्संज्ञा भवति। एवञ्च तृतीयान्तसमर्थप्रातिपदिकात् प्रतीत-ज्ञात-प्रसिद्धार्थेषु चुञ्चुप्-चणपौ प्रत्ययौ परौ भवतः इति सूत्रार्थः।

**उदाहरणम्** - विद्याचुञ्चुः , विद्याचणः। विद्यया वित्तो इति लौकिकविग्रहे विद्या टा इत्यलौकिकविग्रहे प्रकृतसूत्रेण चुञ्चुप्प्रत्यये अनुबन्धलोपे प्रातिपदिकादिकार्ये विद्याचुञ्चुः इति रूपं सिध्यति। चणप्प्रत्ययपक्षे तु विद्याचणः इति रूपं सिध्यति।

## [३१.६] किमिदम्भ्यां वो घः॥ (४.२.४०)

**सूत्रार्थः** - परिमाणार्थे वर्तमानाभ्यां समर्थाभ्यां किम्-इदम्प्रातिपदिकाभ्यां प्रथमान्ताभ्यां तदस्य परिमाणमस्तीत्यर्थे वतुप्प्रत्ययो भवति वतुपः वकारस्य स्थाने च घकारादेशो भवति।



**सूत्रव्याख्या** - विधिसूत्रेऽस्मिन् पदत्रयम् अस्ति। किमिदम्भ्याम् (५/२), वः (६/१), घः (१/१) इति सूत्रगतपदच्छेदः। किम् च इदं च तयोरितरेतरयोगद्वन्द्वे किमिदमौ ताभ्याम् किमिदम्भ्याम्। यत्तदेतेभ्यः परिमाणे वतुप् इत्यतः परिमाणे वतुप् इत्यनयोः, तदस्य सञ्जातं तारकादिभ्य इतच् इत्यतः तदस्य इत्यस्य चानुवृत्तिर्भवति। प्रत्ययः, परश्च, ङ्याप्प्रातिपदिकात्, तद्धिताः, समर्थानां प्रथमाद्वा इति एते अधिक्रियन्ते। तथा च उक्तार्थः सिध्यति एव।

**उदाहरणम्** - किं परिमाणमस्य इति लौकिकविग्रहे किम् सु इत्यलौकिकविग्रहे किमिदम्भ्यां वो घः इत्यनेन वतुप्प्रत्यये वकारस्य स्थाने घ्-आदेशे प्रातिपदिकसंज्ञायां सुब्लुकि किम् घ् अत् इति जाते घ् इत्यस्य स्थाने आयनेयादिसूत्रेण इयादेशे किम् इयत् इति जाते इदंकिमोरीश्की इत्यनेन किम् इत्यस्य स्थाने कि - इत्यादेशो भवति। तेन कि इयत् इति जाते सुविभक्त्युपधादीर्घ-नुमागमहलङ्यादिलोप-संयोगान्तलोपेषु कृतेषु कियान् इति रूपं सिध्यति।



## पाठगतप्रश्नाः -१

१. सर्वभूमेः निमित्तमित्यर्थे निष्पन्नस्य सार्वभौमः इति पदे कः प्रत्ययोऽस्ति।

२. कियान् इत्यत्र कः प्रत्ययः।

३. गोर्भावः इत्यर्थे कति रूपाणि भवन्ति कानि च तानि।

४. विद्याचुञ्चुः इत्यत्र कः प्रत्ययः।

५. विद्याचणः इत्यत्र चणप्प्रत्ययविधायकसूत्रं किम्।

६. जाड्यम् इत्यत्र कः प्रत्ययः।

७. गुणवचनब्राह्मणादिभ्यः कर्मणि च इत्यनेन किं विधीयते।

८. पृथ्वादिभ्य इमनिज्वा इत्येनन कः प्रत्ययो विधीयते।

९. पृथोर्भावः इति विग्रहे किं पदं भवति।

१०. तलन्तस्य स्त्रीलिङ्गकत्वं केन भवति।

## [३१.७] किमोऽत्॥ (५.३.१२)

**सूत्रार्थः** - सप्तम्यन्तात् किम्शब्दात् विकल्पेन अत्प्रत्ययो भवति, पक्षे त्रल् अपि भवति।

**सूत्रव्याख्या** - विधिसूत्रमिदमस्ति। किमः पञ्चम्येकवचनान्तम्, अत् इति प्रथमैकवचनान्तं विधीयमानम्। सप्तम्यास्त्रल् इत्यतः सप्तम्याः इत्यस्य अनुवृत्तिर्भवति। तच्च प्रातिपदिकात् इत्यस्य विशेषणमस्ति। अतः तदन्तविधौ सप्तम्यन्तात् इत्यर्थो लभ्यते। प्रत्ययः, परश्च, ङ्याप्प्रातिपदिकात्, तद्धिताः इति एते अधिक्रियन्ते। तथा च सप्तम्यन्तात् किम्-प्रातिपदिकात् स्वार्थे तद्धितसंज्ञकः अत्प्रत्ययो विकल्पेन भवति इति सूत्रार्थः सम्पद्यते। वा ह छन्दसि इत्यतः वापदस्यानुकर्षणं भवति। अतः तकारः



इत् भवति। तस्मात् अ इत्येव शिष्यते। तित्स्वरितम् इत्यनेन स्वरितस्वरार्थं तकारानुबन्धः कृतः इति ज्ञेयम्।

**उदाहरणम् -** क्व, कुत्र। कस्मिन् इति लौकिकविग्रहे किम् ङि इति सप्तम्यन्तात् प्रातिपदिकात् सप्तम्यास्त्रल् इति योगेन त्रलि प्राप्ते तं बाधित्वा किमोऽत् इति शास्त्रेण अत्प्रत्यये अनुबन्धलोपे किम् अ इति स्थिते क्वाति इति योगेन किम्शब्दस्य स्थाने क्व इत्यादेशे क्व अ इति जाते भसंज्ञकाकारस्य लोपे क्व् अ इति जाते सुप्रत्यये च अव्ययत्वात् विभक्तेः लुकि क्व इति रूपं सिध्यति।

## [३१.८] यत्तदेतेभ्यः परिमाणे वतुप्॥ (५.२.३९)

**सूत्रार्थः -** तत्परिमाणमस्य इत्यर्थे परिमाणे वर्तमानेभ्यः प्रथमान्तेभ्यो यत्तदेतेभ्यस्तद्धितसंज्ञो वतुप्प्रत्ययः स्यात्।

**सूत्रव्याख्या -** विधिसूत्रेऽस्मिन् पदत्रयमस्ति। यत्तदेतेभ्यः (५/३), परिमाणे (७/१), वतुप् (१/१) इति सूत्रगतपदच्छेदः। यत् च तत् च एतत् च इति एतेषाम् इतरेतरयोगद्वन्द्वे यत्तदेतदः, तेभ्यः यत्तदेतेभ्यः। तदस्य सञ्जातं तारकादिभ्य इतच् (५.२.३६) इत्यतः तदस्य इति पदद्वयस्यानुवृत्तिर्भवति। प्रत्ययः, परश्च, ङ्याप्प्रातिपदिकात्, तद्धिताः इति एते अधिक्रियन्ते। तेन तत्=प्रथमान्तेभ्यः यत्तदेतेभ्यः प्रातिपदिकेभ्यः तत्परिमाणमस्य इत्यर्थे तद्धितसंज्ञकः वतुप्-प्रत्ययः परो भवति इति सूत्रार्थः सिध्यति। वतुपः पकारः इत्संज्ञकः उकारश्च उच्चारणार्थः, अतः वत्मात्रं शिष्यते। इदं ध्येयं यत् वतिप्रत्ययान्तशब्दः वत्प्रत्ययान्तशब्दात् भिन्नोऽस्ति। वतिप्रत्ययान्तशब्दः अव्ययं भवति। किन्तु वतुप्प्रत्ययान्तशब्दः त्रिषु लिङ्गेषु अपि भवति इति।

**उदाहरणम् -** यावान्, तावान्, एतावान्।

**सूत्रार्थसमन्वयः -** यत् परिमाणम् अस्य इति लौकिकविग्रहे यत् सु इति प्रथमान्तात् यत्प्रातिपदिकात् प्रकृतसूत्रेण वतुप्-प्रत्यये अनुबन्धलोपे प्रातिपदिकसंज्ञायां सुब्लकि यत् वत् इति जायते। ततः आ सर्वनाम्नः इत्येनन तकारस्य स्थाने आकारादेशे सवर्णदीर्घे सुप्रत्यये च यावत् स् इति स्थितिः उत्पन्ना। ततः उगित्त्वात् उगिदचां सर्वनामस्थानेऽधातोः इत्यनेन नुमागमे अत्वसन्तस्य चाधातोः इत्येनन उपधायाः दीर्घे यावान् त् स् इति जाते सकारस्य हल्ङ्यादिलोपे तकारस्य संयोगान्तलोपे यावान् इति रूपं सिध्यति। स्त्रीत्वविवक्षायां तु उगिदचाम् इति ङीप्प्रत्यये यावती इति, नपुसंकलिङ्गे तु स्वमोर्नपुंसकात् इत्येनन सोः लुकि यावत् इति रूपत्रयं भवति। एवमेव तत् परिमाणमस्य इत्यर्थे तावान्, तावती, तावत् इत्यत्र, एतत् परिमाणमस्य इत्यर्थे एतावान्, एतावती, एतावत् इत्यत्र च समानैव प्रक्रिया ज्ञेया।

ततः परं अस्मिन्नेवार्थे किम्-इदम्-शब्दाभ्यां प्रकारान्तरेण वतुप्प्रत्ययो भवति इति दर्शयितुं सूत्रमिदमारभ्यते-

## [३१.९] किमिदम्भ्यां वो घः॥ (५.२.४४)

**सूत्रार्थः -** किमिदम्भ्यां वतुप्, वकारस्य घश्च।



**सूत्रव्याख्या** - विधिसूत्रेऽस्मिन् पदत्रयमस्ति। किमिदम्भ्याम् (५/२), वः (६/१), घः (१/१) इति सूत्रगतपदच्छेदः। यत्तदेतेभ्यः परिमाणे वतुप् (५.२.३९) इत्यतः परिमाणे, वतुप् इत्यनयोः पदयोः अनुवृत्तिर्भवति। तदस्य सञ्जातं तारकादिभ्य इतच् (५.२.३६) इत्यतः तदस्य इति पदद्वयस्यानुवृत्तिर्भवति। प्रत्ययः, परश्च, ङ्याप्प्रातिपदिकात्, तद्धिताः इति एते अधिक्रियन्ते। तथा च तत्परिमाणमस्य अस्ति इत्यर्थे परिमाणे विद्यमानाभ्यां प्रथमान्ताभ्यां किम्-इदम्-प्रातिपदिकाभ्यां तद्धितसंज्ञो वतुप्प्रत्ययो भवति, किञ्च वकारस्य स्थाने घादेशो भवति इति सूत्रार्थः फलति।

**उदाहरणम्** - कियान्। इयान्।

**सूत्रार्थसमन्वयः** - किम् परिमाणम् अस्य – कियान् (क्या है परिमाण इसका अर्थात् कितना, how much)। अत्र परिमाणार्थे वर्तमानात् किम् सु इति प्रथमान्तात् प्रकृतसूत्रेण तत् परिमाणम् अस्य अस्तीत्यर्थे वतुप्प्रत्यये अनुबन्धलोपे वतुपः वकारस्य घादेशे च किम् घत् इति जायते। ततः आयनेयीनीयियः फढखछघां प्रत्ययादीनाम् इत्यनेन घकारस्य स्थाने इय्-आदेशे किम् इय् अत् इति जाते अग्रिमसूत्रमारभ्यते-

## [३१.१०] इदंकिमोरीश्की॥ (६.३.८९)

**सूत्रार्थः** - दृग्दृशवतुषु इदम ईश्, किमः की स्यात्।

**सूत्रव्याख्या** - विधिसूत्रेऽस्मिन् द्वे पदे स्तः। इदंकिमोः (६/२), ईश्की (लुप्तप्रथमाद्विवचनान्तम्) इति सूत्रगतपदच्छेदः। दृग्दृशवतुषु (६.३.८९) इति सूत्रमनुवर्तते। ईश् च की च ईश्की, इतरेतरयोगद्वन्द्वे सौत्रत्वाद्विभक्तेर्लुक्। अथवा ईश् की इत्येवं द्वे पदे बोध्ये। यथासंख्यमनुदेशः समानाम् इति परिभाषा उपस्थिता भवति। ईशः शकारः शित् अस्ति। अतः शित्त्वात् अनेकाल्शित्सर्वस्य इति परिभाषया इदमः स्थाने ईश् इति सर्वादेशो भवति। एवमेव की इति अनेकाल् अस्ति। तस्मात् तयैव परिभाषया किमः स्थाने की इति सर्वादेशो भवति। तथा च सूत्रार्थस्तावत्- दृग्दृशवतुषु परेषु इदम्-शब्दस्य स्थाने ईश्-आदेशः स्यात्, किम्-शब्दस्य स्थाने च की-आदेशः स्यात् इति।

**उदाहरणम्** - कियान्।

**सूत्रार्थसमन्वयः** - एवञ्च किम् इयत् इति जाते एकदेशविकृतमनन्यवत् इति न्यायेन वतुप्प्रत्यये परतः इदंकिमोरीश्की इति योगेन किमः स्थाने की इति सर्वादेशे की इयत् इति जायते। ततः यस्येति च इत्यनेन भसंज्ञकस्य ईकारस्य लोपे कियत् इति निष्पद्यते। ततः पुंस्त्वविवक्षायां सुप्रत्यये उपधादीर्घे नुमागमे हल्ङ्यादिलोपे संयोगान्तलोपे च कियान् इति रूपं सिध्यति। स्त्रीत्वविवक्षायां तु उगितश्च इति ङीपि कियती इति रूपं, नपुंसकलिङ्गे तु स्वमोर्नपुंसकात् इति सोर्लुकि कियत् इति रूपं च सिध्यति।

एवमेव इदं परिमाणमस्य इत्यर्थे इयान् (पुं), इयती (स्त्री.), इयत् (नपुं.)। अत्रायं विशेषः ज्ञेयः - प्रकृतसूत्रेण इदम्-शब्दस्य स्थाने ईश्-आदेशे ई इयत् इति जाते यस्येति च इत्यनेन भसंज्ञकस्य ईकारस्य लोपे प्रत्ययमात्रमेव शिष्यते। तस्मात् इयान् इत्यादौ प्रकृतिलेशो नास्ति एव।



इदानीम् अवयवपरकात् संख्यावाचकशब्दात् अवयविनः बोधाय तयप्-प्रत्ययं विधातुं सूत्रमिदमारभ्यते-

## [३१.११] संख्याया अवयवे तयप्॥ (५.२.४२)

**सूत्रार्थः** - अवयवे वर्त्तमानात् संख्यावाचकात् प्रथमान्तात् प्रातिपदिकात् अस्य इत्यर्थे तद्धितः तयप्-प्रत्ययो भवति।

**सूत्रव्याख्या** - विधिसूत्रेऽस्मिन् पदत्रयमस्ति। संख्यायाः (५/१), अवयवे (७/१), तयप् (१/१) इति सूत्रगतपदच्छेदः। तदस्य सञ्जातं तारकादिभ्य इतच् (५.२.३६) इत्यतः तदस्य इति पदद्वयस्यानुवृत्तिर्भवति। प्रत्ययः, परश्च, ङ्याप्प्रातिपदिकात्, तद्धिताः इति एते अधिक्रियन्ते। एवञ्च अवयवे वर्तमानात् प्रथमान्तात् संख्यावाचकात् प्रातिपदिकात् अवयवः अस्य अस्ति इत्यर्थे तद्धितसंज्ञकः तयप्-प्रत्ययः परो भवति इति सूत्रार्थः। तयपः पकारः इत्संज्ञकः अस्ति। अतः तय-मात्रं शिष्यते। अनुदात्तौ सुप्पितौ इत्यनेन अनुदात्तस्वरार्थं तयपि पित्करणमस्ति।

**उदाहरणम्** - पञ्चतयम्।

**सूत्रार्थसमन्वयः** - पञ्च अवयवा अस्य सन्ति - पञ्चतयम् (पांच अवयव हैं इस के, अर्थात् पाञ्च अवयवों वाला अवयवी)। अत्र अवयवे वर्तमानात् पञ्चन् जस् इति संख्यावाचकात् प्रथमान्तात् प्रातिपदिकात् अयवयवाः सन्ति अस्य इत्यर्थे प्रकृतसूत्रेण तयपि अनुबन्धलोपे तद्धितान्तत्वात् प्रातिपदिकसंज्ञायां सुब्लुकि पञ्चन् तय इति जायते। ततः स्वादिष्वसर्वनामस्थाने इत्येनन पदसंज्ञायां न लोपः प्रातिपदिकान्तस्य इत्यनेन नकारस्य लोपे नपुंसकलिङ्गे विभक्तिकार्ये पञ्चतयम् इति रूपं सिध्यति। स्त्रीत्वविवक्षायां तु टिड्ढाणञ् इत्यादिसूत्रेण ङीपि भसंज्ञकस्य अकारस्य लोपे पञ्चतयी इति रूपं सिध्यति। तयप्प्रत्ययान्तशब्दस्य धर्मप्रधाननिर्देशे साधारणतः नपुंसकलिङ्गे स्त्रीलिङ्गे च प्रयोगो भवति। यथा- वृत्तीनां पञ्चतयम्, वृत्तीनां पञ्चतयी। धर्मीप्रधाननिर्देशे तु विशेष्यानुसारं लिङ्गं भवति। तेन लिङ्गत्रयं भवति। यथा त्रयाः त्रये वा लोकाः, त्रय्यः स्थितयः, त्रयाणि जगन्ति।

एवमेव चत्वारः अवयवाः अस्य - चतुष्टयम्।

षट् अवयवाः अस्य - षट्तयम्।

सप्त अवयवाः अस्य - सप्ततयम्।

अष्टौ अवयवाः अस्य - अष्टतयम्।

नव अवयवाः अस्य - नवतयम्।



तत्र द्वि-त्रिशब्दाभ्यां विहितस्य तयपः स्थाने विकल्पेन अयच्-विधानार्थं सूत्रमिदमारभ्यते-

## [३१.१२] द्वित्रिभ्यां तयस्यायज्वा॥ (५.२.४३)

**सूत्रार्थः** - द्वित्रिभ्यां परस्य तयस्य अयच् इत्यादेशो वा स्यात्।

**सूत्रव्याख्या** - विधिसूत्रेऽस्मिन् चत्वारि पदानि सन्ति। द्वित्रिभ्याम् (५/२), तयस्य (६/१), अयच् (१/१) वा (अव्ययम्) इति सूत्रगतपदच्छेदः। द्विश्च त्रिश्च तयोः इतरेतरयोगद्वन्द्वे द्वित्रौ, ताभ्यां द्वित्रिभ्याम्। एवञ्च द्वि-त्रिभ्यां प्रातिपदिकाभ्यां विहितस्य तयपः स्थाने विकल्पेन अयजादेशो भवति इति सूत्रार्थः सिध्यति। अयचः चकार इत्संज्ञकः। अयचः चित्करणं चितः (६.१.१५७) इति योगेन अन्तोदात्तस्वरार्थमिति ज्ञेयम्। अयच् इति अनेकाल् अस्ति। अतः अनेकाल्शित्सर्वस्य इति योगेन तय इति सम्पूर्णस्थाने अयच् इति सर्वादेशो भवति।

**उदाहरणम्** - द्वयम्, द्वितयम्। त्रयम्, त्रितयम्।

**सूत्रार्थसमन्वयः** - द्वौ अवयवौ अस्य – द्वयं द्वितयं वा (दो अवयव हैं इस के अर्थात् दो अवयवों वाला अवयवी )। अत्र द्वि औ इति प्रथमान्तात् प्रातिपदिकात् अवयवाः अस्य सन्ति इत्यर्थे संख्याया अवयवे तयप् इति तयप्प्रत्यये इति तयपि अनुबन्धलोपे सुपो धातुप्रातिपदिकयोः इत्यनेन सुब्लुकि द्वि तय इति जायते। ततः द्वित्रिभ्यां तयस्यायज्वा इति प्रकृतसूत्रेण तयस्य स्थाने विकल्पेन अयजादेशे अनुबन्धलोपे द्वि अय इति जाते भसंज्ञकस्य अकारस्य लोपे द् अय इति जायते। ततः विभक्तिकार्ये द्वयम् इति रूपं भवति। अयचः अभावे तयपि तु द्वितयम् इति रूपं भवति।

एवमेव त्रयः अवयवाः अस्य इत्यर्थे त्रयं त्रितयं वा इति रूपं भवति।

कदाचित् तयपः स्थाने नित्यम् अयच्-आदेशो भवति। यथा उभौ अवयवौ अस्य इत्यर्थे उभयम् इति रूपं भवति। अत्र तु उभादुदात्तो नित्यम् इत्यनेन तयपः स्थाने नित्यमेव अयजादेशो भवति।

## [३१.१३] अतिशायने तमबिष्ठनौ॥ (५.३.५५)

**सूत्रार्थः** - अतिशयविशिष्टार्थवृत्तेः स्वार्थे एतौ स्तः।

**सूत्रव्याख्या** - विधिसूत्रमिदम्। द्विपदं सूत्रमस्ति। तमप् च इष्ठन् च तमबिष्ठनौ इति प्रथमैकवचनान्तौ विधीयमानौ प्रत्ययौ। अतिशायने इति सप्तम्येकवचनान्तम्। प्रत्ययः, परश्च, ङ्याप्प्रातिपदिकात्, तद्धिताः इति एते अधिक्रियन्ते। अतिशायनशब्दस्य प्रकर्षः इत्यर्थः, तमपः पकारः इष्ठनः नकारश्च इत्संज्ञकौ भवतः। अतः तम, इष्ठ इत्येव शिष्यते। तमपः पकारानुबन्धः अनुदात्तौ सुप्पितौ इत्यनुदात्तस्वरार्थम्। इष्ठनः नकारानुबन्धः ञ्नित्यादिर्नित्यम् इत्युदात्तस्वरार्थम्। एवञ्च प्रकर्षविशिष्टार्थे वर्तमानात् प्रातिपदिकात् तद्धितसंज्ञकौ तमबिष्ठनौ प्रत्ययौ परौ भवतः इति सूत्रार्थः। तमप्प्रत्ययः प्रत्येकं प्रातिपदिकात् भवति किन्तु इष्ठन्प्रत्ययो गुणवाचकादेव भवति इति पार्थक्यं सम्यक् विज्ञेयम्।



**उदाहरणम्** - अयम् एषाम् अतिशयने लघुः इति लौकिकविग्रहे अतिशयविशिष्टार्थे वर्तमानात् लघु सु इति प्रथमान्तात् प्रातिपदिकात् अतिशायने तमबिष्ठनौ इति योगेन तमप्प्रत्यये अनुबन्धलोपे प्रातिपदिकसंज्ञादिकार्ये लघुतमः इति रूपं सिध्यति। इष्ठन्प्रत्यये तु लघु इष्ठ इति जाते टेः इति सूत्रेण टिसंज्ञकस्य उकारस्य लोपे लघ् इष्ठ इति जाते वर्णसम्मेलने प्रातिपदिकादिकार्ये लघिष्ठः इति रूपं सिध्यति। तमप्प्रत्यये तु लघुतमः इति रूपं भवति।

अयम् एषाम् अतिशयेन आढ्यः इत्यत्र तु आढ्यशब्दः लघुशब्दवत् गुणवाचको नास्ति। अतः न इष्ठन्प्रत्ययः, अपि तु तमप्प्रत्यय एव भवति। तस्मात् आढ्यतमः इत्येव रूपं भवति इति जानीत। बहुषु एकस्य अतिशयबोधनार्थमिदं सूत्रमारब्धम्। द्वयोः एकस्य अतिशयबोधनार्थं तु अग्रिमसूत्रमारभ्यते-

## [३१.१४] द्विवचनविभज्योपपदे तरबीयसुनौ॥ (५.३.५७)

**सूत्रार्थः** - द्वयोरेकस्य अतिशये विभक्तव्ये चोपपदे सुप्तिङन्तादेतौ स्तः।

**सूत्रव्याख्या** - विधिसूत्रम् इदम् अस्ति। अस्मिन् सूत्रे पदद्वयम् अस्ति। उच्यते इति वचनं, द्वयोर्वचनं द्विवचनम्। विभक्तुं योग्यं विभज्यं, द्विवचनं च विभज्यं च तयोः समाहारद्वन्द्वो द्विवचनविभज्यम्। द्विवचनविभज्यं च तद् उपपदम्- द्विवचनविभज्योपपदमिति कर्मधारयः, तस्मिन् इति द्विवचनविभज्योपपदे इति सप्तम्येकवचनान्तम्। तरप् च ईयसुन् च इति तयोरितरेयोगद्वन्द्वो तरबियसुनौ इति प्रथमाद्विवचनान्तौ विधीयमानौ प्रत्ययौ। प्रत्ययः, परश्च, ङ्याप्प्रातिपदिकात्, तद्धिताः इति एते अधिक्रियन्ते। अत्र द्विवचनमिति न पारिभाषिकशब्दः, अपि तु पदार्थद्वयस्य प्रतिपादकम् इत्यर्थः। एवञ्च द्विवचने विभक्तव्ये वा उपपदे सति उत्कर्षविशिष्टार्थे वर्तमानाभ्यां सुबन्ततिङन्ताभ्यां तरप्-ईयसुनौ प्रत्ययौ भवतः इति सूत्रार्थः। तरपः पकारानुबन्धः अनुदात्तौ सुप्पितौ इति अनुदात्तस्वरार्थम्। अत्र सुबन्तं तिङन्तञ्चेति प्रकृतिद्वयम्। द्विवचनं विभज्यं चेति उपपदद्वयम्। तथा तरप् ईयसुन् चेति प्रत्ययद्वयम्। अत्र पारिभाषिकमुपपदं नास्ति अपि तु समीपे उच्चारितं पदम् उपपदमित्यन्वर्थत्वमेव स्वीक्रियते। सूत्रमिदम् अतिशायने तमबिष्ठनौ तिङश्च इति सूत्रयोरपवादभूतमस्ति। अजादी गुणवचनादेव इति नियमानुसारम् ईयसुन्प्रत्ययः गुणवाचकात् प्रातिपदिकादेव भवति न तु तिङन्तात् इति नियमः ध्येयः।

**उदाहरणम्** - द्विवचने उपपदे सुबन्तस्य उदाहरणम्- अयम् अनयोः लघुः-लघुतरः, लघीयान्। अयम् अनयोः अतिशयेन लघुः इति लौकिकविग्रहः। अत्र अनयोः इति पदार्थद्वयस्य प्रतिपादकम् पदं समीपे उच्चारितमस्ति। ततः अतिशयविशिष्टार्थे वर्तमानात् लघु सु इत्यस्मात् सुबन्तात् स्वार्थे द्विवचनविभज्योपपदे तरबीयसुनौ इत्यनेन तरप्प्रत्यये अनुबन्धलोपे प्रातिपदिकंज्ञादिकार्ये लघुतरः इति रूपं सिध्यति। यदा तु ईयसुन्प्रत्ययस्तदा अनुबन्धलोपे टेः इत्यनेन टिसंज्ञकस्य उकारस्य लोपे लघीयस् इति जाते ततः सुप्रत्यये उगिदचां सर्वनामस्थानेऽधातोः इति योगेन नुमागमे लघीयन्स् स् इति जाते सान्महतः संयोगस्य इत्यनेन दीर्घे लघीयान्स् स् इति जाते सोः सकारस्य हल्ङ्यादिलोपे प्रकृतेः सकारस्य संयोगान्तस्य इत्यनेन लोपे लघीयान् इति रूपं सिध्यति। अनया रीत्या पटुतराः इत्यादिरूमपि सिध्यति।

द्विवचने उपपदे तिङन्तस्य उदाहरणम्- इयम् अनयोः अतिशयेन पचति इति पचतितराम्।



विभक्तव्ये उपपदे सुबन्तस्य उदाहरणम्- माथुराः पाटलिपुत्रकेभ्यः आढ्यतराः। अत्र पाटलिपुत्रकेभ्यः इति विभज्योपपदम्।

## [३१.१५] प्रकृत्यैकाच्॥ (६.४.१६३)

**सूत्रार्थः** - इष्ठादिषु एकाच् प्रकृत्या स्यात्।

**सूत्रव्याख्या** - विधिसूत्रम् इदम् अस्ति। अस्मिन् सूत्रे पदद्वयम् अस्ति। प्रकृत्या इति तृतीयैकवचनान्तम्। एकः अच् यस्य तद् एकाच् , बहुव्रीहिसमासः। एकाच् इति प्रथमैकवचनान्तम्। तुरिष्ठेमेयःसु इत्यतः इष्ठेमेयस्सु इत्यस्यानुवृत्तिर्भवति। भस्य, अङ्गस्य इत्युभयम् अधिक्रियते। तथा च विभक्तिविपरिणामेन अङ्गं भम् इत्यर्थो भवति। एवञ्च एकाच् भसंज्ञकम् अङ्गं प्रकृत्या स्यात् इष्ठन्-इमनिच्-ईयसुन्प्रत्ययेषु परेषु सत्सु। स्वेन रूपेण अवस्थानमेव प्रकृतिभाव इत्युच्यते। टेः इति सूत्रेण टिलोपे प्राप्ते तदभावं बोधयितुमस्य प्रवृत्तिर्भवति।

**उदाहरणम्**- श्रेष्ठः, श्रेयान्। अयमेषाम् अतिशयेन प्रशस्य इति लौकिकविग्रहे प्रशस्य सु इत्यलौकिकविग्रहे च अतिशायने तमबिष्ठनौ इति योगेन इष्ठन्प्रत्यये प्रातिपदिकसंज्ञायां सुब्लुकि प्रशस्य इष्ठ इति जाते प्रशस्य श्रः इति योगेन प्रशस्यशब्दस्य स्थाने श्र इत्यादेशे श्र इष्ठ इति जायते। ततः प्रकृतेः एकाच्त्वात् टेः इति योगेन टिलोपे प्राप्ते तं बाधित्वा प्रकृत्यैकाच् इति सूत्रेण प्रकृतिभावे आद्गुणः इत्यनेन गुणैकादेशे श्रेष्ठ इति जायते। ततः स्वादिकार्ये श्रेष्ठः इति रूपं भवति। पुनः द्विवचनविभज्योपपदे तरबीयसुनौ इत्यनेन ईयसुन्प्रत्यये प्रशस्य श्रः इत्यनेन श्रादेशे प्रकृतिवद्भावे गुणैकादेशे स्वादिकार्ये श्रेयान् इति रूपमपि भवति।

अयम् एषाम् अतिशयेन प्रशस्यः इत्यर्थे प्रशस्य सु इति अलौकिकविग्रहे अतिशायने तमबिष्ठनौ इत्यनेन इष्ठन्प्रत्यये अनुबन्धलोपे प्रातिपदिकसंज्ञायां सुब्लकि प्रशस्य इष्ठ इति स्थिते सूत्रमिदमारभ्यते-

## [३१.१६] ज्य च॥ (५.३.६१)

**सूत्रार्थः**- प्रशस्यस्य ज्यादेशः स्यात् इष्ठेयसोः।

**सूत्रव्याख्या** - विधिसूत्रेऽस्मिन् पदद्वयमस्ति। ज्य इति लुप्तप्रथमाकं पदम्। चेति अव्ययपदम्। प्रशस्यस्य श्रः इत्यतः प्रशस्यस्य इत्यस्य, अजादी गुणवचनादेव इत्यतः विभक्तिविपरिणामेन अजादौ इत्यस्यानुवृत्तिर्भवति। प्रत्ययः इत्यस्य अधिकारः अस्ति। तस्य च विभक्तिवचनविपरिणामेन प्रत्यययोः इत्यर्थः। एवञ्च अजाद्योः प्रत्यययोः परतः अर्थात् इष्ठनि ईयसुनि च प्रत्यये परतः प्रशस्यस्य स्थाने ज्य इत्यादेशो भवति इति सूत्रार्थः।

**उदाहरणम्** - ज्येष्ठः।

**सूत्रार्थसमन्वयः** - एवञ्च अयम् एषाम् अतिशयेन प्रशस्यः इत्यर्थे प्रशस्य इष्ठ इति जाते अजादिः इष्ठन्प्रत्ययः परोऽस्ति इति हेतोः प्रकृतसूत्रेण ज्यादेशे भसंज्ञकस्य अकारस्य लोपे प्राप्ते प्रकृत्यैकाच् इत्यनेन प्रकृतिभावे स्वादिकार्ये च ज्येष्ठः इति रूपं भवति।



अयम् एषाम् अतिशयने प्रशस्यः इत्यर्थे तु द्विवचनविभज्योपपदे तरबीयसुनौ इत्यनेन पक्षे ईयसुनि अनुबन्धलोपे प्रातिपदिकसंज्ञायां सुब्लुकि प्रशस्य ईयस् इति जायते। ततः ज्य च इत्यनेन ज्यादेशे ज्य ईयस् इति जाते भसंज्ञकस्य आकारस्य लोपे प्राप्ते तं बाधित्वा प्रकृत्यैकाच् इत्यनेन प्रकृतिभावे लोपो न भवति। ततः ज्यादादीयसः इत्यनेन ईकारस्य स्थाने आकारादेशे ज्या आयस् इति जाते अकः सवर्णे दीर्घः इत्यनेन दीर्घे ज्यायस् इति जायते। ततः स्वादिकार्ये ज्येयान् इति रूपं भवति।

## [३१.१७] कु तिहोः॥ (७.२.१०४)

**सूत्रार्थः** - तकारादिप्रत्ययहकारादिप्रत्यययोः परयोः किम्शब्दस्य स्थाने कु इति सर्वादेशो भवति। ।

**सूत्रव्याख्या** - तिश्च ह् च तयोरितरेतरयोगद्वन्द्वस्तिहौ तयोः इति तिहोः इति सप्तमीद्विवचनान्तौ। विधिसूत्रम् इदम् अस्ति। अस्मिन् सूत्रे पदद्वयमस्ति। अष्टन आ विभक्तौ इत्यतः विभक्तौ, किमः कः इत्यतः किमः इत्यस्यानुवृत्तिर्भवति। यस्मिन्विधिस्तदादावल्ग्रहणे इति परिभाषया तदादिविधिना तकारादि-थकारादि इत्येवमर्थः भवति। सूत्रमिदं किमः कः इत्यस्यापवादभूतम्। एवं सूत्रार्थः सिध्यति।

**उदाहरणम्-** कुतः, कस्मात्। कस्मात् इति लौकिकविग्रहे किम् ङसि इत्यलौकिकविग्रहे पञ्चम्यास्तसिल् इत्यनेन तसिल्प्रत्यये अनुबन्धलोपे प्रातिपदिकसंज्ञायां सुब्लुकि किम् तस् इति जाते प्राग्दिशो विभक्तिः इत्यनेन विभक्तिसंज्ञायां किमः कः इत्यनेन कादेशे प्राप्ते तं बाधित्वा कु तिहोः इत्यनेन कु इति सर्वादेशे कुतस् इति जायते। ततः सुविभक्तौ अव्ययत्वात् च अव्ययादाप्सुप इत्यनेन सोर्लुकि शिष्टस्य सकारस्य रुत्वविसर्गयोः कृतयोः कुतः इति सिध्यति। 'तसिल्' विकल्पेन भवति अतः पक्षे कस्मात् इत्यपि साधु। एवमेव यतः,यस्मात्। ततः, तस्मात्। इतः, अस्मात्। अतः, अस्मात्। अमुतः, अमुष्मात्। बहुतः, बहुभ्यः इत्यादीनि रूपाणि सिध्यन्ति।

## [३१.१८] कृभ्वस्तियोगे संपद्यकर्तरि च्विः॥ (५.४.५०)

**सूत्रार्थः** - विकारात्मतां प्राप्नुवत्यां प्रकृतौ वर्तमानाद् विकारशब्दात् स्वार्थे च्विर्वा स्यात् करोत्यादिभिर्योगे।

**सूत्रव्याख्या** - विधिसूत्रम् इदम् अस्ति। अस्मिन् सूत्रे पदत्रयम् अस्ति। कृश्च भूश्च अस्तिश्च तेषामितरेतरयोगद्वन्द्वः कृभ्वस्तयः। तेषां कृभ्वस्तीनाम्, तेषां योगः कृभ्वस्तियोगः तस्मिन्, कृभ्वस्तियोगे इति सप्तम्येकवचनान्तम्। सम्पदनं सम्पद्यः तस्य कर्ता, सम्पद्यकर्ता, तस्मिन् सम्पद्यकर्तरि इत्यपि सप्तम्येकवचनान्तम्, च्विः इति प्रथमैकवचनान्तो विधीयमानः प्रत्ययः। प्रत्ययः, परश्च, ङ्याप्प्रातिपदिकात्, तद्धिताः इति एते अधिक्रियन्ते। अभूततद्भावे वक्तव्यमिति वार्तिकमत्र आश्रीयते। अभूतस्य=कार्यरूपेण अपरिणतस्य तद्भावः -तेन कार्यरूपेण भावः अभूततद्भावः इत्युच्यते। एवञ्च अभूततद्भावे गम्ये सम्पद्यतेः (बनता है) कर्तृरूपं यत् प्रातिपदिकं तस्मात् प्रातिपदिकात् स्वार्थे विकल्पेन च्विप्रत्ययो भवति यदि कृ, अस्, भू इत्येतेषु केनचित् एकेन सह तस्य प्रातिपदिकस्य योगः भवति। च्वि



इत्यत्र चकारः चुटू इत्यनेन इत्संज्ञकः, वकारश्च वेरपृक्तस्य इत्यनेन इत्संज्ञकः, इकारः उपदेशेऽजनुनासिक इत् इत्यनेन इत्संज्ञकः। अतः च्वि इत्यत्र किमपि नावशिष्यते। अतोऽयं सर्वापहारलोप इत्युच्यते। च्विप्रत्ययान्तस्य ऊर्यादिच्विडाचश्च इत्यनेन निपातसंज्ञायां सत्यां स्वरादिनिपातमव्ययम् इत्यनेन अव्ययसंज्ञको भवतीति मनसि सम्यक् अवधार्यताम्।

**उदाहरणम्-** अकृष्णः कृष्णः सम्पद्यते, तं करोति इति कृष्णीकरोति। अत्र अभूततद्भावः स्पष्ट एवास्ति। सम्पद्यते इत्यस्य कर्तृद्वयमस्ति- अकृष्णः, कृष्णश्च। अत्र विकारवाचककृष्णशब्दं वक्ता प्रामुख्येन कर्तृत्वरूपेण वक्तुमिच्छति। किञ्च तस्य कृधातुना सह योगोऽपि अस्ति, यतो हि इदं कृधातोः कर्मापि अस्ति। अत्र अकृष्णशब्दः प्रकृतिः, कृष्णशब्दश्च विकारः। कार्यकारणे अभेदविवक्षायां कृष्णशब्दः प्रकृतौ अकृष्णे वर्तमानः अस्ति। एवञ्च विकारवाचकात् कृष्ण अम् इति प्रातिपदिकात् अभूततद्भावे इति वक्तव्यमिति वार्तिकसहयोगेन कृभ्वस्तियोगे सम्पद्यकर्तरि च्विः इत्यनेन च्वौ तस्य सर्वापहारलोपे प्रातिपदिकसंज्ञायां सुब्लुकि कृष्ण करोति इति स्थिते अग्रिमसूत्रमिदमारभ्यते-

## [३१.१९] अस्य च्वौ॥ (७.४.३२)

**सूत्रार्थः** - अवर्णस्य ईत्स्यात्च्वौ।

**सूत्रव्याख्या** - विधिसूत्रम् इदम् अस्ति। द्विपदं सूत्रमस्ति। अस्य इति षष्ठ्येकवचनान्तम्। च्वौ इति सप्तम्येकवचनान्तम्। ई घ्राध्मोः इत्यतः ई इत्यनुवर्तते। अङ्गस्य इत्यधिक्रियते। तस्य च विशेषणम् अस्य इति। ततः विशेषणत्वात् तदन्तविधौ अवर्णान्तस्य अङ्गस्य इत्यर्थो भवति। एवञ्च च्विप्रत्यये परतः अवर्णान्तस्य स्थाने ईकारादेशो भवति इति सूत्रार्थः। अलोऽन्त्यस्य इति परिभाषाया उपस्थितिरस्ति। तेन अन्त्यस्य अलः स्थाने अर्थात् अवर्णस्य स्थाने एव ईकारादेशो भवति। च्विप्रत्ययस्य लोपेऽपि प्रत्ययलोपे प्रत्ययलक्षणमिति परिभाषया ईकारादेशः सिध्यति एव।

**उदाहरणम्** - एवञ्च कृष्ण करोति इति जाते अस्य च्वौ इति सूत्रेण णकारोत्तरवर्तिनः अकारस्य स्थाने ईकारादेशे कृष्णी इति रूपं सिध्यति। भवतियोगे तु कृष्णीभवति इति रूपं सिध्यति। एवमेव अब्रह्म ब्रह्म भवति इत्यर्थे ब्रह्मीभवति इति रूपं भवति।

अशुचिः शुचिर्भवति इत्यर्थे तु कृभ्वस्तियोगे सम्पद्यकर्तरि च्विः इति योगेन च्विप्रत्यये तस्य लोपे प्रातिपदिकसंज्ञायां सुब्लुकि शुचि भवति इति जाते अग्रिमसूत्रमारभ्यते-

## [३१.२०] च्वौ च॥ (७.४.२६)

**सूत्रार्थः** - च्वौ च परे पूर्वस्य दीर्घो भवति।

**सूत्रव्याख्या** - विधिसूत्रमस्ति। द्विपदं सूत्रमस्ति। च्वौ इति सप्तम्येकवचनान्तम्, च इत्यव्ययपदम्। अङ्गस्य इत्यधिक्रियते। अचः इति अङ्गस्य इति विशेष्यस्य विशेषणमस्ति। तस्मात् येन विधिस्तदन्तस्य इत्यनेन तदन्तविधौ अजन्तस्य अङ्गस्य इत्यर्थो भवति। अकृत्सार्वधातुकयोर्दीर्घः इत्यतः

दीर्घः इत्यस्यानुवृत्तिर्भवति। तथा च सूत्रार्थः - च्विप्रत्यये परतः अजन्ताङ्गस्य स्थाने दीर्घादिशो भवति। अलोऽन्त्यस्य इति परिभाषया अन्त्यस्यैव अलः=अचः स्थाने दीर्घादिशो भवति।

**उदाहरणम् -** एवञ्च शुचि भवति इति स्थिते च्वौ च इति सूत्रेण दीर्घे इकारस्य ईकारे शुचीभवति इति रूपं सिध्यति।



## पाठगतप्रश्नाः-२

११. अशुचिः शुचिर्भवति इति लौकिकविग्रहे च्विप्रत्यये च किं रूपं भवति।

१२. कृष्णीकरोति इत्यत्र अकारस्य ईत्त्वं केन भवति।

१३. शुचीभवति इत्यत्र दीर्घः केन भवति।

१४. च्विप्रत्ययविधायकसूत्रं किम्।

१५. कस्मात् इत्यर्थे तद्धितान्तशब्दः कः।

१६. किम्शब्दस्य स्थाने कु इत्यादेशः केन भवति।

१७. अयमेषाम् अतिशयेन प्रशस्य इति लौकिकविग्रहे तद्धितान्तशब्दः कः

१८. प्रकृत्यैकाच् इति सूत्रं किं विधिसूत्रम् उत अतिदेशसूत्रम्।

१९. तरप्प्रत्ययविधायकसूत्रं लिखत।

२०. तमप्प्रत्ययविधायकसूत्रं लिखत।



## पाठसारः

तद्धितप्रत्ययसम्बन्धिनि अस्मिन् अन्तिमपाठे प्रायः अस्मद्व्यवहृतानां शब्दानाम् आलोचना विद्यते यथा अस्माकं लोकव्यवहारकाले इमे शब्दाः प्रयोक्तुं शक्याः। अण्-अञ्-त्व-तल्-इमनिच्-ष्यञ्-चुञ्चुप्-चणप्-तरप्-तमप्-ईयसुन्-च्विप्रत्ययानां मुख्यानां विषये अत्र आलोचनं विहितम्। पृथोर्भावः इत्यर्थे कति रूपाणि भवन्ति इति विषये स्पष्टं व्याख्यानं कृतम् इत्येवं विशेषरूपाणि तत्र तत्र ससूत्रं प्रदर्शितानि सन्ति। कृभ्वस्तियोगे संपद्यकर्तरि च्विः इति च्विप्रत्ययविधायकसूत्रं सोदाहरणं व्याख्यातमस्ति। तत्र च अकृष्णः कृष्णः सम्पद्यते इत्यर्थे कृष्णीभवति रूपं सिध्यति, तद्विषये अत्र सम्यक् व्याख्यातमस्ति येन अन्यद्रूपमपि साधयितुं शक्यमस्ति। तरप्तमप्प्रत्यययोः विषये विस्पष्टं व्याख्यानमस्ति येन तादृशप्रत्ययान्तम् अन्यद्रूपमपि साधयितुं शक्नुयात्। एवं तद्धितप्रकरणस्य अयम् अन्तिमः पाठः समाप्तः।





## पाठान्तप्रश्नाः

१. सार्वभौमशब्दस्य रूपसिद्धिः कार्या।

२. तस्य भावस्त्वतलौ इति सूत्रं सोदाहरणं व्याख्यात।

३. पृथोर्भावः इत्यर्थे कति रूपाणि भवन्ति तेषाञ्च रूपसिद्धिः कार्या।

४. तरप्तमप्प्रत्यययोः विषये टिप्पणी लेख्या।

५. कृभ्वस्तियोगे संपद्यकर्तरि च्विः इति सूत्रं सोदाहरणं व्याख्यात

६. गुणवचनब्राह्मणादिभ्यः कर्मणि च इति सूत्रं सोदाहरणं व्याख्यात।

७. सर्वभूमिपृथिवीभ्यामणञौ इति सूत्रं सोदाहरणं व्याख्यात।

८. तस्येश्वरः इति सूत्रं सोदाहरणं व्याख्यात।



## पाठगतप्रश्नोत्तराणि

**उत्तराणि-१**

१. अण्।

२. वतुप्।

३. गोता, गोत्वम् इति रूपद्वयम्।

४. चुञ्चुप्।

५. तेन वित्तश्चुञ्चुप्चणपौ।

६. ष्यञ्।

७. ष्यञ्प्रत्ययः।

८. इमनिच्।

९. प्रथिमा।

१०. तलन्तं स्त्रियाम्।

**उत्तराणि-२**

११. शुचीभवति।

१२. अस्य च्वौ।

१३. च्वौ च।

१४. कृभ्वस्तियोगे संपद्यकर्तरि च्विः।

१५. कुतः।



१६. कु तिहोः।

१७. श्रेष्ठः, श्रेयान्।

१८. विधिसूत्रम्।

१९. द्विवचनविभज्योपपदे तरबीयसुनौ।

२०. अतिशायने तमबिष्ठनौ।

॥इति एकत्रिंशः पाठः॥





# एतत्पुस्तकस्थसूत्राणां सूची

## (अकारादिक्रमेण)

**पाठे स्थानम् - सूत्रम् - अष्टाध्ययीक्रमः**

[२५.५] अज्झनगमां सनि॥ (६.४.१६)
[२६.२२] अणावकर्मकाच्चित्त o॥ (१.३.८८)
[२८.११] अत इञ्॥ (४.१.९५)
[२९.१२] अत इनिठनौ॥ (५.२.११५)
[३१.१३] अतिशायने तमबिष्ठनौ॥ (५.३.५५)
[२६.१] अनुदात्तङित आत्मनेपदम्॥ (१.३.१२)
[२६.१४] अनुपराभ्यां कृञः॥ (१.३.७९)
[२८.४] अपत्यं पौत्रप्रभृतिo॥ (४.१.१६२)
[२६.९] अपह्नवे ज्ञः॥ (१.३.४४)
[२६.१५] अभिप्रत्यतिभ्यः क्षिपः॥ (१.३.८०)
[२४.४] अर्तिह्रीव्लीरीक्नूयीo॥ (७.३.३६)
[२९.१८] अर्शआदिभ्योऽच्॥ (५.२.१२७)
[२९.१५] अस्मायामेधास्रजो विनिः॥ (५.२.१२१)
[३१.१९] अस्य च्वौ॥ (७.४.३२)
[२९.२१] अहंशुभमोर्युस्॥ (५.२.१४०)
[२७.१०] आतो युक्चिण्कृतोः॥ (७.३.३३)
[३०.१६] आत्मन्विश्वजन o॥ (५.१.९)
[२९.१७] आलजाटचौ बहुभाषिणि॥ (५.२.१२५)
[२५.६] इको झल्॥ (१.२.९)
[२५.१२] इङश्च॥ (२.४.४८)
[३१.१०] इदंकिमोरीश्की॥ (६.३.८९)
[२९.१०] ऊषसुषिमुष्कमधोः रः॥ (५.२.१०७)
[२८.१४] ऋष्यन्धकवृष्णिकुरुभ्यश्च॥ (४.१.११४)
[२८.५] एको गोत्रे॥ (४.१.९३)
[२४.३] ओः पुयण्ज्यपरे॥ (३.४.८०)
[२८.३] ओर्गुणः॥ (६.४.१४६)
[२८.१६] कन्यायाः कनीन च॥ (४.१.११६)
[२६.३] कर्तरि कर्मव्यतिहारे॥ (१.३.१४)
[३१.६] किमिदम्भ्यां वो घः॥ (४.२.४०)
[३१.९] किमिदम्भ्यां वो घः॥ (५.२.४४)
[३१.७] किमोऽत्॥ (५.३.१२)
[२५.११] किरश्च पञ्चभ्यः॥ (७.२.७५)
[३१.१७] कु तिहोः॥ (७.२.१०४)
[२८.२३] कुरुनादिभ्यो ण्यः॥ (४.१.१७२)
[३१.१८] कृभ्वस्तियोगे संपद्य o॥ (५.४.५०)
[२९.११] केशाद्वोऽन्यतरस्याम्॥ (५.२.१०९)
[३०.७] क्रमादिभ्यो वुन्॥ (४.२.६१)
[२४.१८] क्रीङ्जीनां णौ (६.१.४८)।
[२८.१९] क्षत्राद् घः॥ (४.१.१२८)
[२६.१३] गन्धनाऽवक्षेपण o (१.३.३२)
[२८.६] गर्गादिभ्यो यञ्॥ (४.१.१०५)
[३१.४] गुणवचनब्राह्मणादिभ्यःo॥ (५.१.१२४)
[२९.५] गुणवचनेभ्यो मतुपो लुगिष्टः॥ (वा)
[२८.९] गोत्राद्यून्यस्त्रियाम्॥ (४.१.९४)
[३०.१९] गोश्च पुरीषे॥ (४.३.१४५)
[३०.५] ग्रामजनबन्धुभ्यस्तल्॥ (४.२.४३)
[३०.१५] ग्रामाद्यखञौ॥ (४.२.९४)
[२७.११] चिण्णमुलोर्दीर्घोऽ o॥ (६.४.९३)
[२७.४] चिण्भावकर्मणोः॥ (३.१.६६)
[३१.२०] च्वौ च॥ (७.४.२६)
[२८.२२] जनपदशब्दात् क्षत्रियादञ्॥ (४.१.१६८)
[३०.१८] जिह्वामूलाङ्गुलेश्छः॥ (४.३.६२)
[२८.८] जीवति तु वंश्ये युवा॥ (४.१.१६३)
[३१.१६] ज्य च॥ (५.३.६१)
[२८.२१] ठस्येकः॥ (७.३.५०)
[२४.१७] णौ गमिरबोधने॥ (२.४.४६)।
[२४.७] णौ च संश्चङोः॥ (६.१.३१)
[२४.१] तत्प्रयोजको हेतुश्च॥ (१.४.५५)
[३०.६] तदधीते तद्वेद॥ (४.२.५९)
[३०.८] तदस्मिन्नस्तीतिo॥ (४.२.६७)
[२९.१] तदस्यास्त्यस्मिन्निति मतुप्॥ (५.२.९४)
[२८.२५] तद्राजस्य बहुषुo॥ (२.४.६२)



[२५.४] सः स्यार्धधातुके॥ (७.४.४९)
[३१.११] संख्याया अवयवे तयप्॥ (५.२.४२)
[२५.१] सनाद्यन्ता धातवः॥ (३.१.३२)
[२५.७] सनि ग्रहगुहोश्च॥ (७.२.१२)
[२५.८] सनि च॥ (२.४.४७)
[२५.१४] सनीवन्तर्धभ्रस्ज o॥ (७.२.४९)
[२५.३] सन्यङोः॥ (६.१.९)
[२६.८] समवप्रविभ्यः स्थः॥ (१.३.२२)
[२६.१०] समस्तृतीयायुक्तात्॥ (१.३.५४)
[३०.१७] सायञ्चिरम्प्राह्णेप्रगेo॥ (४.३.२३)
[२७.२] सार्वधातुके यक्॥ (३.१.६७)
[३०.४] सास्य देवता॥ (४.२.२४)
[२४.१५] सिध्यतेरपारलौकिके॥ (६.१.४९)
[२९.१९] सुखादिभ्यश्च॥ (५.२.१३१)
[२८.१] स्त्रीपुंसाभ्यां नञ्स्नञौ॥ (४.१.८७)
[२८.१५] स्त्रीभ्यो ढक्॥ (४.१.१२०)
[२७.३] स्यसिच्सीयुट्तासिषुo॥ (६.४.६२)
[२५.१०] हलन्ताच्च॥ (१.२.१०)
[२४.२] हेतुमति च (३.१.२६)

# राष्ट्रियमुक्तविद्यालयीशिक्षासंस्थानम्

## उच्चतरमाध्यमिककक्षायाः पाठ्यक्रमः

## संस्कृतव्याकरणम् (३४६)

### औचित्यम्

भावविनिमयमाध्यमं हि भाषा। भाषायाः उन्नतिः समाजस्य उन्नतिं द्योतयति। समाजः उन्नतान् विविधान् भावान् प्रकटयितुम् भाषाम् व्यवहरति। यदि भाषा त्रुटिता स्यात् तर्हि भावप्रकटने काठिन्यं भवति एव। तदा भाषाकोविदाः भाषाव्यवहारकर्तारः च भाषायां परिवर्तनं कुर्वन्ति। भाषाम् उपयोगिनीं विदधति। क्रमशः भाषायाः परिवर्तनस्य नियमाः जायन्ते। ईदृशानां भाषानियमानां संकलनमेव व्याकरणम्। प्रतिदेशं भाषा भिन्ना। प्रतिराज्यं भाषा भिन्ना। अत एव अन्यैः सह भावविनिमयः दुष्करः। एकभाषासु विद्यमानाद् उत्तमाद् वाङ्मयाद् अन्यभाषिका वञ्चिता भवन्ति। अयं महान् अन्तरायः वर्तते। अतः तथा काचित् महीयसी पवित्रा च भाषा ग्राह्या, सकलभाषाः यस्याः सन्ततिस्वरूपाः। संस्कृतमेव सा भाषा। सा एव भाषासमस्यानाम् एकमेव समाधानम्। संस्कृतभाषायाः सुदृढं व्याकरणमस्ति। नवीनशब्दनिर्माणसामर्थ्यमपि अस्ति। दशसहस्रवर्षपूर्वतनं ग्रन्थम् वयम् अद्यापि पठितुं बोद्धुं शक्नुमः यदि वयं संस्कृतं जानीमः। अद्य अस्माभिः निर्मितं साहित्यं सहस्रवर्षोत्तरमपि जनाः पठितुं शक्ष्यन्ति यदि वयं संस्कृतेन लेखनं कुर्मः। अतः विश्वस्मिन् विश्वे संस्कृतमेव सर्वश्रेष्ठा भाषा। संस्कृतशिक्षया संस्कृतशब्दानाम् उच्चारणमात्रं जातिः गौरवान्विता शक्तिभृता च भवति। भारते यः संस्कृतं जानाति तं विरुद्ध्य न कोऽपि वक्तुं शक्नोति। धर्मरहस्यं काव्यरहस्यं दर्शनरहस्यं च अस्यां भाषायां निबद्धमस्ति। यो भाषां जानाति तस्य पुरः ज्ञानभाण्डार उद्घाटितः तिष्ठति। न केवलमेतावन्मात्रम्। स्वामी विवेकानन्दः उक्तवान् - 'निम्नजातीयान् वदामि - युष्माकम् अवस्थायाः उन्नतिसाधनस्य एकमात्रोपायः संस्कृतभाषाशिक्षणम्।' समाजे जातिभेदस्य नाशोऽपि संस्कृताध्ययनेन भवेत्। अतः न केवलम् उच्चजातीनाम् कृते अपि तु सर्वेषां कृते संस्कृतम् अत्यन्तम् उपकारकम् अस्ति।

जगति प्रायः सर्वाः भाषाः संस्कृतभाषात एव समुद्भूताः। सर्वासामपि मूलम् इयं भाषा। भारतस्य प्राचीनेतिहासस्य अध्ययनमपि दैशिका वैदेशिकाः च विद्वांसः चिकीर्षन्ति। परन्तु संस्कृतभाषाज्ञानं विना पङ्गुवत् ते भवन्ति।

भाषा राज्यनिर्माणकाले राज्यभेदानां कारणम् अभवत्। देशे विभाजनस्य कारणं प्रादेशिकभाषाः। परन्तु संस्कृतम् राष्ट्रैक्यस्य कारणमस्ति। बौद्धानां जैनानां हिन्दूनां च मूलग्रन्थाः, नैके दार्शनिकग्रन्थाः, काव्यानि अस्यामेव भाषायां सन्ति। अतः इयं केवलं कस्यचित् एकस्य धर्मस्य भाषा इति वचनं मूर्खजल्पनम्।

काणादं पाणिनीयं च सर्वशास्त्रोपकारकम् इति प्राचीनोक्तिः। अर्थात् आन्वीक्षिकी विद्या (न्यायशास्त्रम्), पाणिनीयं व्याकरणम् अन्येषां सर्वेषामपि शास्त्राणाम् उपकारकमस्ति। अतः संस्कृते यां कामपि शाखां पिपठिषुः न्यायं व्याकरणं च नूनं पठेत्। अतः संस्कृतजिज्ञासूनां कृते व्याकरणस्य आत्यन्तिकीम् उपयोगिताम् अभिलक्ष्य इदं व्याकरणम् पाठ्यविषयत्वेन निर्धारितमस्ति।

महर्षिः पतञ्जलिः अभ्युपगच्छति यत् संस्कृतव्याकरणज्ञानपूर्वकम् यदि संस्कृतभाषाप्रयोगः क्रियते तर्हि प्रयोगकर्ता पुण्यं लभते। अयमपि व्याकरणाध्ययनस्य लाभोऽस्ति। अथापि व्याकरणम् अध्येयम्।

भाषया भावविनिमयकाले क्वचिदपि त्रुटिः भवति चेत् विघ्नः अपि भवितुमर्हति। शत्रवो मित्राणि भवितुमर्हन्ति, मित्राणि शत्रवो भवितुमर्हन्ति। अतः भाषाया अनन्यसाधारणं गुरुत्वमस्ति एव। तथाहि सुभाषितम् -

यद्यपि बहुनाधीषे तथापि पठ पुत्र व्याकरणम्।

स्वजनः श्वजनो माभूत् सकलं शकलं सकृत् शकृत्।।

अर्थात् - (हे) पुत्र, यद्यपि (त्वम्) बहु न अधीषे (पठसि), तथापि व्याकरणम् पठ। (व्याकरणाज्ञानकारणात्) स्वजनः (आत्मीयः) श्वजनो (कुक्कुरः) मा भूत्, सकलं (समग्रम्) शकलं (खण्डम्) मा भूत्, सकृत् (एकवारम्) शकृत् (विष्ठा/मलः) मा भूत्। अथापि अध्येयं व्याकरणम्।

## अधिकारी

अयं पाठ्यविषयः सम्पूर्णरूपेण संस्कृतभाषया लिखितः अस्ति। परीक्षा अपि संस्कृतमाध्यमेन एव भविष्यति। अतः अस्य पाठस्य कः अधिकारी इति नूनम् समुदेति प्रश्नः।

अत्र स छात्रः अधिकृतः यः -

- ❖ अधीतकाव्यकोषः अनधीतव्याकरणशास्त्रः।
- ❖ सरलसंस्कृतं, संस्कृतसाहित्यास्य सरलगद्यांशान् पद्यांशान् च पठितुम् बोद्धुं च शक्नोति।
- ❖ सरलसंस्कृतं बोद्धुं शक्नोति।
- ❖ स्वभावं संस्कृतभाषया लिखित्वा प्रकटयितुं शक्नोति।
- ❖ संस्कृतव्याकरणं जिज्ञासुरस्ति।

## प्रयोजनम् (सामान्यम्)

उच्चमाध्यमिकस्तरे पाणिनीयव्याकरणस्य पाठ्यत्वेन योजनस्य कानिचन उद्देशानि अत्राधो दीयन्ते।

- ❖ न्यायशास्त्रं व्याकरणशास्त्रं च सर्वशास्त्राणाम् अध्ययने अति उपकारकम् अस्ति। अतः व्याकरणज्ञानं छात्रस्य भवतु इति लक्ष्यम्।
- ❖ जगति सुप्रसिद्धस्य पाणिनीयव्याकरणस्य केषाञ्चित् प्रकरणानां सामान्यं दशमकक्षायां ज्ञानं जातम्। अवशिष्टभागस्य ज्ञानं छात्रस्य भवतु। कक्षाद्वयव्यापी अयं विषयः।
- ❖ संस्कृतव्याकरणाध्ययनेन समर्थः छात्रः अन्यासां भाषाणामपि तुलनात्मकाध्ययने प्रवर्तताम्।
- ❖ संस्कृतभाषाजिज्ञासूनां जिज्ञासाप्रशमनाय अध्येता समर्थो भवतु।
- ❖ संस्कृतस्य संस्कृतेश्च रक्षणाय व्याकरणज्ञानेन समर्थः प्रयत्नपरः श्रद्धाशीलः भवतु छात्रः।
- ❖ अति प्राचीनाया भारतीयज्ञानसम्पदः वैज्ञानिकता सर्वजनोपकारिता महिमा च सगर्वं जगति प्रसारयेत् छात्रः।
- ❖ संस्कृतव्याकरणस्य सामान्यज्ञानवर्धनं भविष्यति येन संस्कृतस्य सरलान् अंशान् पठित्वा छात्राः तेषाम् अंशानाम् अर्थान् ज्ञास्यन्ति। ते स्वतः मौखिकीं लिखितां च अभिव्यक्तिं कर्तुं शक्ष्यन्ति।
- ❖ संस्कृतव्याकरणं पठित्वा छात्राः महाविद्यालयस्तरे विश्वविद्यालयस्तरे च प्रवर्तमानेषु पाठ्यक्रमेषु अध्ययनार्थम् अवसरं प्राप्तुं समर्थाः भविष्यन्ति।
- ❖ भाषाशास्त्रचिन्तने शक्ताः भविष्यन्ति।

## प्रयोजनम् (विशिष्टम्)

**व्याकरणे प्रवेशस्य सामर्थ्यम्**

- महर्षेः पाणिनेः अष्टाध्यायी इति सुविख्यातस्य ग्रन्थस्य अध्ययने समर्थः भवेदध्येता।
- व्याकरणं द्वादशभिः वर्षैः पठ्यते। सविशालो विस्तरो विद्यते। दशमकक्षायां व्याकरणं पठित्वा व्याकरणे प्रविष्टः छात्रः इमं विषयं पठित्वा व्याकरणं समग्रां व्याप्तिम् सामान्येन जानीयात्।
- व्याकरणाध्ययनं सोपनक्रमेण भवति। प्रथमिकानि सोपनानि दशकक्षायाम् अतिक्रान्तानि। तथापि यावत् अयं शेषः पाठ्यविषयः न पठ्यते तावद् अन्यत्र व्याकरणं न पठितुं शक्यते। अतः अनिवार्योऽयं विषयः।
- सूत्राणां रचना कथं कृता इति स्पष्टं ज्ञानं भवेत्।
- पठितसामग्रीम् आश्रितानां प्रश्नानाम् उत्तराणि दातुं पारयेत्।।

### सूत्रव्याख्याने सामर्थ्यम्

- समासस्य विविधानि सूत्राणि जानीयात्।
- बहून् व्याकरणस्य पारिभाषिकशब्दान् जानीयात्।
- अधिकारः अनुवृत्तिः पदयोजना च कथं भवति इति ज्ञास्यति
- सूत्रार्थकरणे अन्येषां सूत्राणाम् उपयोगिताम् अवगच्छेत्।
- सूत्रे पदानां परस्परम् अन्वयं कर्तुं प्रभवेत्।
- सूत्रव्याख्याने समर्थो भवेत्।

### सूत्रप्रयोगस्य सामर्थ्यम्

- सूत्रं लक्षणं कथ्यते। सूत्रं यस्य संस्कारं करोति तत् लक्ष्यं कथ्यते। किं सूत्रं कस्य लक्ष्यस्य संस्कारं करोति इति ज्ञात्वा छात्रः लक्ष्यसंस्कारं कर्तुं शक्ष्यति।
- लक्ष्यसंस्कारकाले सूत्राणां परस्परविरोधं परिहर्तुं समर्थो भविष्यति।
- समग्रं साधुरूपं साधुवाक्यं वा सूत्रप्रयोगपुरःसरं निष्पादयितुं समर्थो भविष्यति।

### साधुशब्दप्रयोगस्य सामर्थ्यम्

- सूत्राणि व्यवहृत्य साधुशब्दं निष्पाद्य निःसंकोचं व्यवहर्तुं योग्यः भविष्यति।
- स्वयं संस्कृतभाषाप्रयोगकाले स्वभाषादोषान् ज्ञात्वा व्याकरणसाहाय्येन दोषान् दूरीकृत्य शुद्धभाषाप्रयोगे समर्थो भविष्यति।
- अन्यप्रयुक्तायाः दुष्टभाषायाः अपि संशोधने समर्थो भविष्यति।

## पाठ्यसामग्री

### पाठ्यक्रमेण सह निम्नलिखितसामग्री समायोजिता भविष्यति-

- त्रीणि मुद्रितानि पुस्तकानि।
- एकं शिक्षकाङ्कित-मूल्याङ्कनप्रपत्रम् प्रदास्यते। अनेन सह छात्रैः एकं परियोजनाकार्यमपि करणीयम्।
- व्याकरणस्य शिक्षणं प्रायोगिकरूपेण अपि भविष्यति। परन्तु प्रायोगिकपरीक्षा कापि नास्ति।

- पाठनिर्माणे संपर्ककक्षासु च अध्यापनकाले छात्रेषु जीवनकौशलानां सम्यक् विकासः भवेत् इति ध्यातव्यम् भविष्यति। अनेन तेषु स्वतः युक्तिसमन्वितचिन्तनशक्तेः विकासः भविष्यति।
- मुक्तविद्यालये प्रवेशोत्तरं पाठ्यक्रममिमं विद्यार्थी एकवर्षत: अधिकाधिकं पञ्चवर्षेषु पूरयितुं शक्नोति।

## अङ्कमूल्यायनप्रविधिः परीक्षायोजना च

- पत्रस्य (१००) शतम् अङ्काः सन्ति। परीक्षाकालः होरात्रयात्मकः। अस्य पत्रस्य लिखितस्वरूपमेवास्ति (Theory)। प्रायोगिकरूपं (Practical) किमपि नास्ति। क्रमिकम् (Formative) समुच्चितं (Summative) चेति द्विविधं मूल्यायनं भविष्यति।
- **क्रमिकं मूल्यायनम् -** विंशतेः अङ्कानां (२०) शिक्षकाङ्कितस्य कार्यस्य (TMA) एकमेव पत्रं स्यात्। अस्य मूलायनम् अध्ययनकेन्द्रे (Study Centre) भवेत्। अस्य कार्यस्य अङ्काः अङ्कपत्रिकायां (Marks sheet) पृथक् उल्लिखिताः स्युः।
- **समुच्चितं मूल्यायनम् -** वर्षे वारद्वयं (मार्चमासि अक्टोबरमासि च) बाह्यपरीक्षा भविष्यति। तत्र परीक्षायां समुच्चितं मूल्यायनं भविष्यति।
- प्रश्नपत्रे ज्ञानम् (Knowledge), अवगमम् (Understanding) अभिव्यक्तिं (Application skill) चावलम्ब्य युक्तानुपातेन प्रश्नाः समाविष्टाः स्युः।
- परीक्षासु अतिलघूत्तरात्मक- लघूत्तरात्मक-निबन्धात्मक-प्रश्नानामपि समावेशः भविष्यति।
- सूत्रार्थः सूत्रव्याख्या रूपसाधनम् इति त्रयो मुख्याः विषयाः स्युः। अन्ये प्रसक्तानुप्रसक्ताः केचिद् विषयाः अपि स्युरिति अवधेयम्।
- उत्तीर्णतायै पणः (condition) - प्रतिशतं त्रयस्त्रिंशद् (३३%) अङ्काः उत्तीर्णतायै पणः (मानदण्डः) वर्तते।
- संस्थानस्य परीक्षायाम् उत्तरलेखनभाषा - संस्कृतम् (अनिवार्यम्)

## अध्ययनयोजना

- निर्देशभाषा (Medium of instruction) - संस्कृतम्।
- स्वाध्यायाय कालावधिः (Self-study hours) २४० होराः
- न्यूनतः त्रिंशत् (३०) सम्पर्ककक्षाः (Personal Contact Programme - PCP) अध्ययनकेन्द्रेषु भविष्यन्ति।
- भारांशः - सैद्धान्तिकः (Theory) शतं प्रतिशतम्।
- प्रायोगिकम् (Practical) - नास्ति।

## अङ्कविभाजनम्

अग्रे सारण्यां द्रष्टव्यम्

## पाठ्यविषयस्य उद्देशः (पाठ्यविषयबिन्दवः)

उच्चतरमाध्यमिककक्षाया व्याकरणस्य पुस्तके निम्नविषयाः अन्तर्भवन्ति। विवरणमधस्तादुपन्यस्यते।-

समग्रस्य पाठ्यविषयस्य त्रयो भागाः प्रकल्पिताः सन्ति। प्रतिभागम् कति पाठाः, स्वाध्यायाय कति होराः, सैद्धान्तिकपरीक्षायाम् कियान् अंशः, प्रायोगिकपरीक्षायाम् कियान् अंशः, प्रत्यध्यायम् अङ्कविभाजनं चेति विषयाः अत्र प्रदीयन्ते।

## अध्यायः - १ समासः स्त्रीप्रत्ययाः च (पाठाः १-११)

### अध्यायस्य औचित्यम्

यथा प्रकृतिप्रत्ययमेलनेन शब्दः निष्पद्यते तथा द्वयोः पदयोः मेलनेन समासः निष्पद्यते। समासः कर्तव्यः चेत् किं पदं पूर्वम् किं वा परम् इति विवेकः अपेक्ष्यते। ततश्च साधुशब्दनिर्माणस्य समासस्य काचित् स्वकीया प्रक्रिया अस्ति सा अत्र ससूत्रम् उपन्यस्यते। समासस्य ज्ञानं विना समासस्य अर्थः स्पष्टः न भवति। अतः संस्कृतज्ञेन नूनं समासः अध्येतव्यः। अतः सविस्तरम् अत्र विभागे प्रपञ्चो विधास्यते।

संस्कृतभाषायां स्त्रीलिङ्गिशब्दाः शब्दाः सन्ति। तत्र लिङ्गं शब्दस्य अर्थस्य वा इति विचारः प्रस्तूयते। विभिन्नानां शब्दानां स्त्रीप्रत्यययोगेन किंविधं रूपं भवति इति ससूत्रमत्र पदर्श्यते। अस्य प्रकरणस्य ज्ञानेन स्त्रीलिङिशब्दानां निर्माणप्रक्रिया स्पष्टीभविष्यति।

## अध्यायः - २ तिङन्तप्रकरणम् (पाठाः - १२-२३)

### अध्यायस्य औचित्यम्

साधुशब्दनिर्माणं व्यवहारश्च व्याकरणस्य मुख्यं लक्ष्यम्। सुबन्ततिङन्तभेदेन पदं द्विविधम्। तिङ्ङपि परस्मैपदात्मनेपदभेदेन द्विविधः। धातवः विकरणभेदेन दशगणेषु विभक्ताः। अतः अस्मिन् विभागे धातोः तिङ्प्रत्यययोगेन पदसाधनस्य प्रक्रिया सूत्रव्याख्यानपुरःसरं प्रदर्श्यते। तत्र भ्वादिप्रकरणम् अति मुख्यम्। तज्ज्ञानेन अन्येषापि ज्ञानं झटिति भवितुमर्हति तत्प्रकरणमत्र सविस्तरमुपन्यस्यते। क्रियापदनिर्माणस्य व्याकरणप्रक्रिया अत्र प्रमुखो विषयः। कथं क्रियापदं सृज्यते संस्कृते इति रमणीयोऽयं विषयोऽत्र।

## अध्यायः - ३ णिजन्तादिकं तद्धितप्रत्ययाः च (पाठाः २४-३१)

### अध्यायस्य औचित्यम्

तिङन्तप्रकरणस्यैव अंशभूतोऽयं विभागः। अत्र वैशिष्ट्यं हि प्रयोजकधातुनिर्माणम् इच्छार्थकसन्नन्तधातुनिर्माणमिति। ततश्च विशिष्टार्थद्योतनाय उपसर्गयोगेन वा धातोः परं कदाचित् परस्मैपदं भवति कदाचिच्च आत्मनेपदं भवति। अस्मिन् प्रकरणे सोऽपि भागः वर्तते। कर्तरि प्रयोगः कर्मणि प्रयोगः भावे प्रयोगः इति त्रिविधः प्रयोगो भवति संस्कृते। तथा प्रयोगः कर्तव्यः चेत् धातोः रूपं कथं साधनीयमपि ससूत्रमिह उपादीयते।

सुबन्तपदस्य प्रकृतिषु अन्यतमो भवति तद्धितान्तशब्दः। स च प्रातिपदिकात् तद्धितप्रत्यययोगेन निष्पद्यते। विविधाः तद्धितप्रत्ययाः। अतः विभागशः तज्ज्ञानाय अयं विभागः साहाय्यं करोति। प्रातिपदिकात् तद्धितप्रत्ययः कथं भवतीति ससूत्रमत्र उपन्यस्यते। अत्र निर्मितः तद्धितान्तशब्दः सुबन्तप्रकरणे व्यवह्रियते।

## पाठ्यविषयस्य उद्देशः (पाठ्यविषयबिन्दवः)

| क्र.सं. | | मुख्यबिन्दवः | स्वाध्यायाय होराः | भारांशः (अङ्काः) |
|---|---|---|---|---|
| १ | अध्यायः- १ | समासः स्त्रीप्रत्ययाः च | ७८ | ३६ |
| | पाठः - १ | केवलसमासः अव्ययीभावसमासः च | | |
| | पाठः - २ | तत्पुरुषसमासः - द्वितीयादितत्पुरुषसमासः | | |
| | पाठः - ३ | तत्पुरुषसमासः- तद्धितार्थादितत्पुरुषसमासः | | |
| | पाठः - ४ | तत्पुरुषसमासः- कुगतिप्रादिसमासः, उपपदसमासः च | | |
| | पाठः - ५ | बहुव्रीहिसमासः- व्यधिकरणबहुव्रीहिः समान्तप्रत्ययः च | | |
| | पाठः - ६ | बहुव्रीहिसमासः- समासान्तप्रत्ययः निपातव्यवस्थादिकम् | | |
| | पाठः - ७ | द्वन्द्वसमासः- पूर्वपरनिपातः विशेषकार्याणि एकशेषः च | | |
| | पाठः - ८ | प्रकीर्णं समासप्रकरणम् | | |
| | | स्त्रीप्रत्ययः- | | |
| | पाठः - ९ | स्त्रीप्रत्ययः- चाप् टाप् डाप् प्रत्ययाः | | |
| | पाठः - १० | स्त्रीप्रत्ययः- ङीप् ङीप् प्रत्ययौ | | |
| | पाठः - ११ | स्त्रीप्रत्ययः- ङीष्-प्रत्ययः | | |
| २ | अध्यायः- २ | तिङन्तप्रकरणम् - | १०० | ४० |
| | पाठः - १२ | भ्वादिप्रकरणे- भूधातोः लटि रूपसाधनम् -१ | | |
| | पाठः - १३ | भ्वादिप्रकरणे- भूधातोः लटि रूपसाधनम् -२ | | |
| | पाठः - १४ | भ्वादिप्रकरणे - भूधातोः लिटि लुटि च रूपसाधनम् | | |
| | पाठः - १५ | भ्वादिप्रकरणे- भूधातोः लृटि लोटि च रूपसाधनम् | | |
| | पाठः - १६ | भ्वादिप्रकरणे- भूधातोः लिङि लुङि लृङि च रूपसाधनम् | | |
| | पाठः - १७ | भ्वादिप्रकरणे - लट् लिट् एतयोः सूत्रशेषः | | |
| | पाठः - १८ | भ्वादिप्रकरणे - लिट्-लकास्य सूत्रशेष | | |
| | पाठः - १९ | भ्वादिप्रकरणे - लिङ् लुङ् एतयोः सूत्रशेषः | | |
| | पाठः - २० | भ्वादिप्रकरणे आत्मनेपदप्रकरणम् | | |
| | पाठः - २१ | अदादितः दिवादिपर्यन्तम् - अद् हु दिव् धातवः | | |
| | पाठः - २२ | स्वादितः रुधादिपर्यन्तम्- सु तुद् रुध् धातवः | | |
| | पाठः - २३ | तनादितः चुरादिपर्यन्तम्- तन् कृ क्री चुर् धातवः | | |

| ३ | अध्यायः- ३ | णिजन्तादिकं तद्धितप्रत्ययाः च- | ६२ | २४ |
|---|---|---|---|---|
| | पाठः - २४ | तिङन्ते णिजन्तप्रकरणम् | | |
| | पाठः - २५ | तिङन्ते सन्नन्तप्रकरणम् | | |
| | पाठः - २६ | तिङन्ते परस्मैपदात्मनेपदविधानम् | | |
| | पाठः - २७ | तिङन्ते भावकर्मप्रकरणम् | | |
| | | **तद्धिताः-** | | |
| | पाठः - २८ | तद्धितेषु अपत्याधिकारः | | |
| | पाठः - २९ | तद्धितेषु मत्वर्थीयप्रत्ययाः | | |
| | पाठः - ३० | तद्धितेषु रक्ताद्यर्थकप्रत्ययाः | | |
| | पाठः - ३१ | तद्धितेषु ठञधिकारः | | |

# प्रश्नपत्रस्य प्रारूपम् (Question Paper Format)

विषयः - संस्कृतव्याकरणम् (३४६) (Sanskrit Vyakaran) स्तरः- उच्चतरमाध्यमिककक्षा

परीक्षाकालावधिः (Time)- होरात्रयम् (३ hrs) पूर्णाङ्काः (Full Marks)- १००

## लक्ष्यानुसारि अङ्कविभाजनम्

| विषयाः | अङ्काः | प्रतिशतं योगः |
|---|---|---|
| ज्ञानम् (Knowledge) | २५ | २५% |
| अवबोधः (Understanding) | ४५ | ४५% |
| अनुप्रयोगकौशलम् (Application Skill) | ३० | ३०% |
| **महायोगः->** | **१००** | |

## प्रश्नप्रकारेण अङ्कभारविभाजनम्

| प्रश्नप्रकारः | प्रश्नसंख्या | अङ्काः | योगः |
|---|---|---|---|
| दीर्घोत्तरीयप्रश्नाः (LA) | ५ | ६ | ३० |
| लघूत्तरात्मकप्रश्नाः (SA) | १० | ४ | ४० |
| सुलघूत्तरीयप्रश्नाः (VSA) | १० | २ | २० |
| बहुविकल्पीयप्रश्नाः एकाङ्कप्रश्नाः स्तम्भमेलनं रिक्तस्थानपूर्तिः च | १० | १ | १० |
| **महायोगः->** | **३५** | | **१००** |

## पाठ्यविषयविभागानुसारि भारांशः

| विषयघटकाः | अङ्काः | स्वाध्यायाय होराः |
|---|---|---|
| १. संज्ञापरिभाषम् | २५ | ४६ |
| २. संधिप्रकरणम् | १४ | ३६ |
| ३. सुबन्तप्रकरणम् | २७ | ८१ |
| ४. विभक्त्यर्थप्रकरणम् | २२ | ४९ |
| ५. कृदन्तप्रकरणम् | १२ | २८ |
| **महायोगः ->** | **१००** | **२४०** |

## प्रश्नपत्रस्य काठिन्यस्तरः

| प्रश्नस्तरः | अङ्काः |
|---|---|
| कठिनः (Difficult) (मेधावी एव उत्तरदाने समर्थः) | २५ |
| मध्यमः (Medium) (नित्यं पठन् अध्यवसायी छात्रः उत्तरदाने समर्थः) | ५० |
| सरलः (Easy) (समग्रां पाठसामग्रीम् अल्पशः पठन् छात्रः उत्तरदाने समर्थः) | २५ |

# प्रश्नपत्रप्रतिमा

अस्मिन् प्रश्नपत्रे ... प्रश्नाः सन्ति। .... मुद्रितपुटानि च सन्ति।

| Roll No. अनुक्रमाङ्कः | ४ | ५ | ० | १ | ५ | ९ | १ | ८ | ३ | ० | ० | १ | Code No. गूढसंख्या | ५५/SS/A/S |
|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|

स्तबकः **A**

## Sanskrit Vyakaran

## संस्कृतव्याकरणम्

## (३४६)

Day and Date of Examination
परीक्षादिनं दिनाङ्कश्च ..... ____________________

Signature of two Invigilators
निरीक्षकयोः हस्ताक्षरम् १) ____________________

२) ____________________

## सामान्या निर्देशाः

१. अनुक्रमाङ्कः प्रश्नपत्रस्य प्रथमपुटे नूनं लेख्यः।

२. निरीक्ष्यताम् यत् प्रश्नपत्रस्य पुटसंख्या प्रश्नानां च संख्या प्रथमपुटस्य प्रारम्भे प्रदत्तसंख्या समाना न वा। प्रश्नक्रमः सम्यग् न वा।

३. वस्तुनिष्ठप्रश्ननाम् (क), (ख), (ग), (घ) एषु विकल्पेषु युक्तम् उत्तरं चित्वा उत्तरपत्रे लेख्यम्।

४. समेषां प्रश्नानाम् उत्तराणि निर्धारितसमये एव लेख्यानि।

५. उत्तरपत्रे आत्मपरिचयात्मकं लेखनम् अथवा निर्दिष्टस्थानं विहाय अन्यत्र क्वापि अनुक्रमाङ्कलेखनं सर्वथा वर्जितमस्ति।

६. स्वस्य उत्तरपत्रे प्रश्नपत्रस्य गूढसंख्या नूंन लेख्या।

७. समेषां प्रश्नानाम् उत्तराणि संस्कृतभाषया एव लेख्यानि।

# संस्कृतव्याकरणम् (Sanskrit Vyakaran)

## (३४६)

परीक्षासमयावधिः (Time) होरात्रयम् (३ Hrs) पूर्णाङ्काः (Full Marks) - १००

---

**निर्देशाः -**

१. अस्मिन् प्रश्नपत्रे [A] भागे ११, [B] भागे ११, [C] भागे ११, [D] ६ इति आहत्य ३९ प्रश्नाः सन्ति।

२. प्रश्नस्य दक्षिणे पार्श्वे संख्यासु (अङ्काःx प्रश्नाः=पूर्णाङ्काः) इति एवम् अङ्कान् निर्दिशति।

३. समे प्रश्ना अनिवार्याः।

---

### [A] दशानां युक्तं विकल्पं चिनुत। १ x १०=१०

१) लिङ्गं कस्य भवति।
(क) शब्दस्य (ख) अर्थस्य (ग) पदस्य (घ) अर्थस्य पदस्य च।

२) युवतिः इत्यत्र स्त्रीप्रत्ययविधायकं सूत्रं किम्।
(क) यूनस्तिः (ख) स्त्रियाम् (ग) षिद्गौरादिभ्यश्च (घ) पुंयोगादाख्यायाम्

३) वयसि प्रथमे इत्यस्य उदाहरणम् किम्।
(क) कुमारी (ख) अजा (ग) गौरी (घ) कुन्ता

४) बैदी इत्यत्र स्त्रीप्रत्ययविधायकं सूत्रं किम्।
(क) शार्ङ्गरवाद्यञौ ङिन् (ख) स्त्रियाम् (ग) षिद्गौरादिभ्यश्च (घ) पुंयोगादाख्यायाम्

५) क्षीयात् इति कस्मिन् लकारे रूपम्।
(क) विधिलिङ् (ख) लृट् (ग) आशीर्लिङ् (घ) लट्

६) चिक्षिय इति रूपे धातोः परं कः तिङ् प्रत्ययः।
(क) तिप् (ख) सिप् (ग) थस् (घ) थ

७) दिवादिगणीयधातुभ्यः कः विकरणप्रत्ययो भवति।
(क) शप् (ख) श्यन् (ग) श्नुः (घ) श्नम्।

८) हुश्नुवोः सार्वधातुके इति कस्य अपवादः।
(क) अचि श्नुधातुभ्रुवां य्वोरियङुवङौ (ख) लोपश्चास्यान्यतरस्यां म्वोः
(ग) उतश्च प्रत्ययादसंयोगपूर्वात् (घ) दश्च

९) धातोः सन्प्रत्ययः कस्मिन्नर्थे भवति।
(क) भावार्थे (ख) स्वार्थे (ग) इच्छार्थे (घ) कर्मार्थे

१०) शैवः इत्यत्र कः प्रत्ययः विद्यते।
(क) अण् (ख) अञ् (ग) कञ् (घ) ठञ्।

**[B] दशानां यथानिर्देशम् उत्तराणि लिखत।** **२ x १०=२०**

१) विग्रहः क। स च कतिविधः। १+१=२

२) केवलसमासस्य लक्षणं किम्। तस्य एकम् उदाहरणं लिखत। १+१=२

३) द्वित्रिभ्यां ष मूर्ध्नः इति सूत्रस्यार्थः कः। द्वित्रिभ्यां ष मूर्ध्नः इति सूत्रस्य किमुदाहरणम्। १+१=२

४) निष्ठा इति सूत्रस्यार्थं लिखत। निष्ठा इति केषां संज्ञा, केन च सूत्रेण विहिता। १+१=२

५) द्वन्द्वसमासविधायकं सूत्रं लिखत। तस्य अर्थमुदाहरणं च लिखत। १+१=२

६) जग्लौ इत्यत्र कः धातुः। कस्तदर्थः। कस्मिन् लकारे इदं रूपम्। १+१=२

७) अनुदात्तोपदेशादिसूत्रं पूरयत। तदर्थं च लिखत। १+१=२

८) सुधातोः लिटि मध्यमपुरुषबहुवचने कति रूपाणि भवन्ति। तानि च कानि। १+१=२

९) अतिष्ठिपत् इत्यत्र उपधायाः इकारादेशविधायकं सूत्रं किम्। तदर्थं च लिखत। १+१=२

१०) कन्यायाः कः आदेशः भवति। केन सूत्रेण भवति। १+१=२

**[C] दश अनतिदीर्घोत्तरैः समाधत्त।** **४ x १०=४०**

१) उपकृष्णम् अधिहरि इति अनयोरेकं रूपं ससूत्रं साधयत।

२) कुमारी इत्वरी इत्यनयोरेकं रूपं ससूत्रं साधयत।

३) कुम्भकारः महाराज इति अनयोरेकं समासं ससूत्रं साधयत।

४) वृत्तिस्वरूपं लिखित्वा तद्भेदान् प्रतिपादयत।

५) बभूव अकटीत् इत्यनयोरेकं रूपं ससूत्रं साधयत।

६) एधामास एधस्व इत्यनयोरेकं रूपं ससूत्रं साधयत।

७) हु-झल्भ्यो हेर्धिः इति लुङ्सनोर्घसॢ इति अनयोरकं सूत्रं सोदाहरणं व्याख्यात।

८) पिपठिषति जिगमिषति इत्यनयोरेकं रूपं साधयत।

९) मीमांसकः इति रूपं ससूत्रं साधयत।

१०) गार्ग्यः इति रूपं सूत्रोल्लेखपुरःसरं साधयत।

**[D] पञ्च दीर्घोत्तरैः समाधेयाः।** **६ x ५=३०**

१) तद्धितार्थोत्तरपदसमाहारे च इति सूत्रं व्याख्यात

२) विधिनिमन्त्रणामन्त्रणाधीष्टसंप्रश्नप्रार्थनेषु लिङ् इति सूत्रं व्याख्यात।

३) भवति एधते इत्यनयोरेकं रूपं ससूत्रं साधयत।

४) असावीत् अरुणत् इत्यनयोरेकं रूपं ससूत्रं साधनीयम्।

५) ओः पुयण्ज्यपरे इति अर्तिह्रीव्लीरीक्नूयीक्ष्माय्यातां पुङ्णौ इति योगयोरेकः सोदाहरणं व्याख्येयः।

--)(O)(--

# प्रश्नपत्रप्रतिमाया उत्तरमाला

[A] दशानां युक्तः विकल्पः। 		१ x १०=१०

१-(ख), २-(क), ३-(क), ४-(क), ५-(ग), ६-(घ), ७-(ख), ८-(क), ९-(ग), १०-(क)

[B] दशानां यथानिर्देशम् उत्तराणि। 		२ x १०=२०

१) वृत्त्यर्थावबोधकं वाक्यं विग्रहः। स द्विविधः। लौकिकोऽलौकिकश्च। परिनिष्ठितत्वात्साधुर्लौकिकः। प्रयोगानर्होऽसाधुरलौकिकः।" इति। १+१=२

२) अव्ययीभावादिविशेषसंज्ञाभिः विनिर्मुक्तः यः समासः स केवलसमासः। तदुदाहरणं हि भूतपूर्वः इति। १+१=२

३) बहुव्रीहिसमासे द्वित्रिभ्यां परस्य मूर्ध्नः समासान्तः तद्धितसंज्ञकः षप्रत्ययो भवति। तदुदाहरणं हि द्विमूर्धः इति।१+१=२

४) निष्ठान्तं बहुव्रीहौ पूर्वं भवति। निष्ठा इति क्तक्तवतू निष्ठा इति सूत्रेण विहिता क्तप्रत्ययस्य क्तवतुप्रत्ययस्य च संज्ञा।१+१=२

५) द्वन्द्वसमासविधायकं सूत्रं तावत् - चार्थे द्वन्द्वः इति। तस्य अर्थो हि - अनेकं सुबन्तं चार्थे वर्तमानं विकल्पेन समस्यते, स च द्वन्द्वसंज्ञको भवति।उदाहरणं च ईषकृष्णौ इति। १+१=२

६) जग्लौ इत्यत्र ग्लै धातुः। हर्षक्षय इति तदर्थः। लिटि तिपि इदं रूपम्। १+१=२

७) अनुदात्तोपदेशवनतितनोत्यादीनामनुनासिकलोपो झलि क्ङिति इति सूत्रम्। सूत्रार्थः - अनुनासिकान्तानामेषां वनतेश्च लोपः स्यात् झलादौ किति ङिति च परे। १+१=२

८) द्वे रूपे। ते च सुषुविढ्वे-सुषुविध्वे। १+१=२

९) तिष्ठतेरित् इति सूत्रम्। सूत्रार्थः - उपधाया इदादेशः स्याच्चङ्परे णौ। १+१=२

१०) कन्यायाः कनीन आदेशः भवति। स चादेशः कन्यायाः कनीन च इति सूत्रेण भवति। १+१=२

[C] स्वच्छन्दं दश अनतिदीर्घोत्तरैः समाधत्त। 		४ x १०=४०

१) बिन्दुः - १.११ / १.८ द्रष्टव्यः

२) बिन्दुः - १०.३ / १०.६ द्रष्टव्यः

३) बिन्दुः - ४.५ / ४.११ द्रष्टव्यः

४) बिन्दुः - ८.१ द्रष्टव्यः

५) बिन्दुः - १४.१ / १९.९ द्रष्टव्यः

६) बिन्दुः - २०.४ / २०.१० द्रष्टव्यः

७) बिन्दुः - २१.५ / २१.७ द्रष्टव्यः

८) बिन्दुः - २५.२ / २५.८ द्रष्टव्यः

९) बिन्दुः - ३०.७ द्रष्टव्यः

१०) बिन्दुः - २८.६ द्रष्टव्यः

[D] छन्देन पञ्च दीर्घोत्तरैः समाधेयाः। 		६ x ५=३०

१) बिन्दुः - ३.२ द्रष्टव्यः

२) बिन्दुः - १६.१ द्रष्टव्यः

३) बिन्दुः - १३.६ / २०.१ द्रष्टव्यः

४) बिन्दुः - २२.५ / २२.११ द्रष्टव्यः

५) बिन्दुः - २४.३ / २४.४ द्रष्टव्यः